# अथ द्वाविंशः सर्गः ॥ (प्रा. सं. 24)

राक्षसीभिः सीतातर्जनम् ॥

*ராக்ஷஸிகள் பலரும் ஸீதையைப் பலவிதமாய்ப் பயமுறுத்துதல்.*

ततः सीतां समस्तास्ता राक्षस्यो विकृताननाः । परुषं परुषानर्हामूचुस्तां वाक्यमप्रियम् ॥ 1
किं त्वमन्तःपुरे सीते सर्वभूतमनोरमे । महार्हशयनोपेते न वासमनुमन्यसे ॥ 2
मानुषी मानुषस्यैव भार्यात्वं बहु मन्यसे । प्रत्याहर मनो रामान्नैवं जातु भविष्यति ॥ 3
त्रैलोक्यवसुभोक्तारं रावणं राक्षसेश्वरम् । भर्तारमुपसंगम्य विहरस्व यथासुखम् ॥ 4
मानुषी मानुषं तं तु राममिच्छसि शोभने । राज्याद्भ्रष्टमसिद्धार्थं विक्लवन्तमनिन्दिते ॥ 5
राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा । नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ 6
यदिदं लोकविद्विष्टमुदाहरथ संगताः । नैतन्मनसि वाक्यं मे किल्बिषं प्रतितिष्ठति ॥ 7
न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ 8
दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः । तं नित्यमनुरक्तास्मि यथा सूर्यं सुवर्चला ॥ 9
यथा शची महाभागा शक्रं समुपतिष्ठति । अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥ 10
लोपामुद्रा यथागस्त्यं सुकन्या च्यवनं यथा । सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ॥ 11
सौदासं मदयन्तीव केशिनी सगरं यथा । नैषधं दमयन्तीव भैमी पतिमनुव्रता ॥ 12
तथाहमिक्ष्वाकुवरं रामं पतिमनुव्रता । सीताया वचनं श्रुत्वा राक्षस्यः क्रोधमूर्छिताः ।
भर्त्सयन्ति स परुषैर्वाक्यै रावणचोदिताः ॥ 13
अवलीनः स निर्वाक्यो हनुमाञ्शिंशपाद्रुमे । सीतां संतर्जयन्तीस्ता राक्षसीरशृणोत्कपिः ॥ 14
तामभिक्रम्य संरब्धा वेपमानां समन्ततः । भृशं संलिलिहुर्दीप्तान्प्रलम्बान्दशनच्छदान् ॥ 15
ऊचुश्च परमक्रुद्धाः प्रगृह्याशु परश्वधान् । नेयमर्हति भर्तारं रावणं राक्षसाधिपम् ॥ 16
सा भर्त्स्यमाना भीमाभी राक्षसीभिर्वराङ्गना । सा बाष्पमपमार्जन्ती शिंशपां तामुपागमत् ॥ 17
ततस्तां शिंशपां सीता राक्षसीभिः समावृता । अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ॥ 18
तां कृशां दीनवदनां मलिनाम्बरवासिनीम् । भर्त्सयांचक्रिरे भीमा राक्षस्यस्ताः समन्ततः ॥ 19
ततस्तु विनता नाम राक्षसी भीमदर्शना । अब्रवीत्कुपिताकारा कराला निर्णतोदरी ॥ 20
सीते पर्याप्तमेतावद्भर्तुः स्नेहः प्रदर्शितः । सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते ॥ * 21
परितुष्टास्मि भद्रं ते मानुषस्ते कृतो विधिः । ममापि तु वचः पथ्यं ब्रुवन्त्याः कुरु मैथिलि ॥ 22
रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् । विक्रान्तं रूपवन्तं च सुरेशमिव वासवम् ॥ 23
दक्षिणं त्यागशीलं च सर्वस्य प्रियदर्शनम् । मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय ॥ 24

---

21. *எதுவும் அளவுக்கு மிஞ்சினால் துன்பத்தை யுண்டாக்கும்.*

दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता । अद्यप्रभृति लोकानां सर्वेषामीश्वरी भव ॥ 25
अग्नेः स्वाहा यथा देवी शचीवेन्द्रस्य शोभने । किं ते रामेण वैदेहि कृपणेन गतायुषा ॥ 26
एतदुक्तं च मे वाक्यं यदि त्वं न करिष्यसि । अस्मिन्मुहूर्ते सर्वास्त्वां भक्षयिष्यामहे वयम् ॥ 27
अन्या तु विकटा नाम लम्बमानपयोधरा । अब्रवीत्कुपिता सीतां मुष्टिमुद्यम्य तर्जती ॥ 28
बहून्यप्रतिरूपाणि वचनानि सुदुर्मते । अनुक्रोशान्मृदुत्वाच्च सोढानि तव मैथिलि ॥ 29
न च नः कुरुषे वाक्यं हितं कालपुरस्कृतम् । आनीतासि समुद्रस्य पारमान्यैर्दुरासदम् ॥ 30
रावणान्तःपुरं घोरं प्रविष्टा चासि मैथिलि । रावणस्य गृहे रुद्धां अस्माभिस्त्वभिरक्षिताम् ॥ 31
न त्वां शक्तः परित्रातुमपि साक्षात्पुरंदरः । कुरुष्व हितवादिन्या वचनं मम मैथिलि ॥ 32
अलमश्रुनिपातेन त्यज शोकमनर्थकम् । भज प्रीतिं प्रहर्षं च त्यजन्ती नित्यदैन्यताम् ॥ 33
सीते राक्षसराजेन परिक्रीड यथासुखम् । जानीमहे यथा भीरु स्त्रीणां यौवनमध्रुवम् ॥ 34
यावन्न ते व्यतिक्रामेत्तावद्दुःखमवाप्नुहि । उद्यानानि च रम्याणि पर्वतोपवनानि च ॥ 35
सह राक्षसराजेन चर त्वं मदिरेक्षणे । स्त्रीसहस्राणि ते देवि वशे स्थास्यन्ति सुन्दरि ॥ 36
रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् । उत्पाट्य वा ते हृदयं भक्षयिष्यामि मैथिलि ॥ 37
यदि मे व्याहृतं वाक्यं न यथावत्करिष्यसि । ततश्चण्डोदरी नाम राक्षसी क्रूरदर्शना ॥ 38
भ्रामयन्ती महच्छूलमिदं वचनमब्रवीत् । इमां हरिणशावाक्षीं त्रासोत्कम्पपयोधराम् ॥ 39
रावणेन हृतां दृष्ट्वा दौर्हृदो मे महानयम् । यकृत्प्लीहं महत्क्रोडं हृदयं च सबन्धनम् ॥ 40
आन्त्राण्यपि तथा शीर्षं खादेयमिति मे मतिः । ततस्तु प्रघसा नाम राक्षसी वाक्यमब्रवीत् ॥ 41
विशस्येमां ततः सर्वान्समान्कुरुत पिण्डकान् । विभजाम ततः सर्वा विवादो मे न रोचते ॥ 42
पेयमानीयतां क्षिप्रं लेह्यं च विविधं बहु । ततः शूर्पणखा नाम राक्षसी वाक्यमब्रवीत् ॥ 43
अजामुख्या यदुक्तं वै तदेव मम रोचते । सुरा चानीयतां क्षिप्रं सर्वशोकविनाशिनी ॥ 44
मानुषं मांसमासाद्य नृत्यामोऽथ निकुम्भिलाम् । एवं निर्भर्त्स्यमाना सा सीता सुरसुतोपमा ।
राक्षसीभिर्विरूपाभिर्धैर्यमुत्सृज्य रोदिति ॥ 45

इति द्वाविंशः सर्गः ॥

---

## अथ त्रयोविंशः सर्गः ॥ (प्रा. सं. 25)

राक्षसीतर्जनमसहमानायाः सीतायाः निर्वेदः ॥

*அரக்கிகளின் பயமுறுத்தலைக் கேட்டுப் பொறுக்காமல், அசோகமரக்கிளையைப் பற்றிக்கொண்டு, ஸீதை பலவாறு புலம்புதல்.*

तथा तासां वदन्तीनां परुषं दारुणं बहु । राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥ 1
एवमुक्ता तु वैदेही राक्षसीभिर्मनस्विनी । उवाच परमत्रस्ता बाष्पगद्गदया गिरा ॥ 2

न मानुषी राक्षसस्य भार्या भवितुमर्हति । कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ 3
सा राक्षसीमध्यगता सीता सुरसुतोपमा । न शर्म लेभे शोकार्ता रावणेन च भर्त्सिता ॥ 4
वेपते स्माधिकं सीता विशन्तीवाङ्गमात्मनः । वने यूथपरिभ्रष्टा मृगी कोकैरिवार्दिता ॥ 5
सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पिताम् । चिन्तयामास शोकेन भर्तारं भग्नमानसा ॥ 6
सा स्नापयन्ती विपुलौ स्तनौ नेत्रजलस्रवैः । चिन्तयन्ती न शोकस्य तदान्तमधिगच्छति ॥ 7
सा वेपमाना पतिता प्रवाते कदली यथा । राक्षसीनां भयत्रस्ता विवर्णवदनाभवत् ॥ 8
तस्याः सा दीर्घबहुला वेपन्त्याः सीतया तदा । ददृशे कम्पिनी वेणी व्यालीव परिसर्पती ॥ 9
सा निःश्वसन्ती शोकार्ता कोपोपहतचेतना । आर्ता व्यसृजदश्रूणि मैथिली विललाप च ॥ 10
हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च । हा श्वश्रूर्मम कौसल्ये हा सुमित्रेति भामिनी ॥ 11
लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः । अकाले दुर्लभो मृत्युः स्त्रियो वा पुरुषस्य वा ॥ * 12
यत्राहमाभिः क्रूराभी राक्षसीभिरिहार्दिता । जीवामि हीना रामेण मुहूर्तमपि दुःखिता ॥ 13
एषाल्पपुण्या कृपणा विनशिष्याम्यनाथवत् । समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता ॥ 14
भर्तारं तमपश्यन्ती राक्षसीवशमागता । सीदामि खलु शोकेन कूलं तोयहतं यथा ॥ 15
तं पद्मदलपत्राक्षं सिंहविक्रान्तगामिनम् । धन्याः पश्यन्ति मे नाथं कृतज्ञं प्रियवादिनम् ॥ 16
सर्वथा तेन हीनाया रामेण विदितात्मना । तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम जीवनम् ॥ 17
कीदृशं तु महापापं मया देहान्तरे कृतम् । येनेदं प्राप्यते घोरं महादुःखं सुदारुणम् ॥ 18
जीवितं त्यक्तुमिच्छामि शोकेन महता वृता । राक्षसीभिश्च रक्षन्त्या रामो नासाद्यते मया ॥ 19
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् । न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥ * 20

इति त्रयोविंशः सर्गः ॥

## अथ चतुर्विंशः सर्गः ॥ (प्रा. सं. 26)

सीतायाः प्राणपरित्यागेच्छा ॥

*ஸீதை பிராணனை விடுகிறதென்று தீர்மானித்தல்.*

प्रसक्ताश्रुमुखी त्वेवं ब्रुवती जनकात्मजा । अधोगतमुखी बाला विलप्तुमुपचक्रमे ॥ 1
उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती । उपावृत्ता किशोरीव विचेष्टन्ती महीतले ॥ 2
राघवस्य प्रमत्तस्य रक्षसा कामरूपिणा । रावणेन प्रमथ्याहमानीता क्रोशती बलात् ॥ 3
राक्षसीवशमापन्ना भर्त्स्यमाना च दारुणम् । चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ॥ 4

12. ஸ்திரீக்கோ, புருஷனுக்கோ, அகாலத்தில் ம்ருத்யு கிட்டாதென்ற அறிந்தோர் முதுமொழி ஸத்தியமே.

20. மானிடப்பிறவி இழிந்தது. பிறர்வசமாதல் மேலும் இழிவானது. என் விருப்பப்படி உயிரை விடவும் என்னாலே முடியவில்லையே!

नहि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः। वसन्त्या राक्षसीमध्ये विना रामं महारथम्॥ 5
अश्मसारमिदं नूनमथवाप्यजरामरम्। हृदयं मम येनेदं न दुःखेन विशीर्यते॥ 6
धिङ्मामनार्यामसतीं याहं तेन विना कृता। मुहूर्तमपि रक्षामि जीवितं पापजीविका॥ 7
चरणेनापि सव्येन न स्पृशेयं निशाचरम्। रावणं किं पुनरहं कामयेयं विगर्हितम्॥ 8
प्रत्याख्यानं न जानाति नात्मानं नात्मनः कुलम्। यो नृशंसस्वभावेन मां प्रार्थयितुमिच्छति॥ 9
छिन्ना भिन्ना प्रभिन्ना वा दीप्तावाग्नौ प्रदीपिता। रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम्॥ 10
ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः। सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात्॥ 11
राक्षसानां जनस्थाने सहस्राणि चतुर्दश। येनैकेन निरस्तानि स मां किं नाभिपद्यते॥ 12
कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा। न तु राघवबाणानां गतिरोधो भविष्यति॥ 13
किं नु तत्कारणं येन रामो दृढपराक्रमः। रक्षसापहृतां भार्यामिष्टां यो नाभिपद्यते॥ 14
इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः। जानन्नपि स तेजस्वी धर्षणां मर्षयिष्यति॥ 15
हृतेति मां योऽधिगत्य राघवाय निवेदयेत्। गृध्रराजोऽपि स रणे रावणेन निपातितः॥ 16
कृतं कर्म महत्तेन मां तदाभ्यावपद्यता। तिष्ठता रावणद्वन्द्वे वृद्धेनापि जटायुषा॥ 17
यदि मामिह जानीयाद्वर्तमानां हि राघवः। अद्य बाणैरभिक्रुद्धः कुर्याल्लोकमराक्षसम्॥ 18
निर्दहेच्च पुरीं लङ्कां शोषयेच्च महोदधिम्। रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत्॥ 19
ततो निहतनाथानां राक्षसीनां गृहे गृहे। यथाहमेवं रुदती तथा भूयो न संशयः॥ 20
अन्विष्य रक्षसां लङ्कां कुर्याद्रामः सलक्ष्मणः। नहि ताभ्यां रिपुर्दृष्टो मुहूर्तमपि जीवति॥ 21
चिता धूमाकुलपथा गृध्रमण्डलसंकुला। अचिरेणैव कालेन श्मशानसदृशी भवेत्॥ 22
अचिरेणैव कालेन प्राप्स्याम्येनं मनोरथम्। दुष्प्रस्थानोऽयमाभाति सर्वेषां वो विपर्ययः॥ 23
यादृशानि तु दृश्यन्ते लङ्कायामशुभानि तु। अचिरेणैव कालेन भविष्यति हतप्रभा॥ 24
नूनं लङ्का हते पापे रावणे राक्षसाधिपे। शोषमेष्यति दुर्धर्षा प्रमदा विधवा यथा॥ 25
पुण्योत्सवसमृद्धा च नष्टभर्त्री सराक्षसा। भविष्यति पुरी लङ्का नष्टभर्त्री यथाङ्गना॥ 26
नूनं राक्षसकन्यानां रुदतीनां गृहे गृहे। श्रोष्यामि न चिरादेव दुःखार्तानामिह ध्वनिम्॥ 27
सान्धकारा हतद्योता हतराक्षसपुंगवा। भविष्यति पुरी लङ्का निर्दग्धा रामसायकैः॥ 28
यदि नाम स शूरो मां रामो रक्तान्तलोचनः। जानीयाद्वर्तमानां हि राक्षसस्य निवेशने॥ 29
अनेन तु नृशंसेन रावणेनाधमेन मे। समयो यस्तु निर्दिष्टस्तस्य कालोऽयमागतः॥ 30
स च मे विहितो मृत्युरस्मिन्दुष्टेन वर्तते। अकार्यं ये न जानन्ति नैर्ऋताः पापकारिणः॥ 31
अधर्मात्तु महोत्पातो भविष्यति हि सांप्रतम्। नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः॥ 32
ध्रुवं मां प्रातराशार्थं राक्षसः कल्पयिष्यति। साहं कथं करिष्यामि तं विना प्रियदर्शनम्॥ 33
रामं रक्तान्तनयनमपश्यन्ती सुदुःखिता। क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना॥ 34
नाजानाज्जीवतीं रामः स मां लक्ष्मणपूर्वजः। जानन्तौ तु न कुर्यातां नोर्व्यां हि परिमार्गणम्॥ 35

नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः । देवलोकमितो यातस्त्यक्त्वा देहं महीतले ॥ 36
धन्या देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ 37
अथवा नहि तस्यार्थो धर्मकामस्य धीमतः । मया रामस्य राजर्षेर्भार्यया परमात्मनः ॥ 38
दृश्यमाने भवेत्प्रीतिः सौहृदं नास्त्यदृश्यतः । नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति ॥ * 39
किं वा मय्यगुणाः केचित्किं वा भाग्यक्षयो हि मे । याहं सीदामि रामेण हीना मुख्येन भामिनी ॥ 40
श्रेयो मे जीवितान्मर्तुं विहीनाया महात्मना । रामादक्लिष्टचारित्राच्छूराच्छत्रुनिबर्हणात् ॥ 41
अथवा न्यस्तशस्त्रौ तौ वने मूलफलाशनौ । भ्रातरौ हि नरश्रेष्ठौ संवृत्तौ वनगोचरौ ॥ 42
अथवा राक्षसेन्द्रेण रावणेन दुरात्मना । छद्मना घातितौ शूरौ भ्रातरौ रामलक्ष्मणौ ॥ 43
साहमेवंविधे काले मर्तुमिच्छामि सर्वथा । न च मे विहितो मृत्युरस्मिन्दुःखेऽतिवर्तति ॥ 44
धन्याः खलु महात्मानो मुनयः त्यक्तकिल्बिषाः । जितात्मानो महाभागा येषां न स्तः प्रियाप्रिये ॥ * 45
प्रियान्न संभवेद्दुःखमप्रियादधिकं भवेत् । ताभ्यां हि ते वियुज्यन्ते नमस्तेषां महात्मनाम् ॥ * 46
साहं त्यक्ता प्रियेणैव रामेण विदितात्मना । प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम् ॥ 47

इति चतुर्विंशः सर्गः ॥

---

## अथ पञ्चविंशः सर्गः ॥ (प्रा. सं. 27)

स्वापोद्दृष्टा त्रिजटा राघवस्य जयं रावणस्य विनाशं च स्वप्ने दृष्ट्वा तदावेदनम् ॥

*ஹிம்ஸிக்கும் ராக்ஷஸிகளின் மத்தியில் விழித்தெழுந்த திரிஜடை ஸீதையின் க்ஷேமத்தையும், லங்கையின் அழிவையும் கனவில் கண்டதாக அறிவித்து, ஸீதையை சரணடையும்படி ராக்ஷஸிகளைத் தூண்டல். ஸீதையின் உடலில் காணப்படும் நல்ல ஸூசகங்களையும் குறிப்பிடுதல். ஸீதை சந்தோஷமடைந்து ராக்ஷஸிகளைக் காப்பாற்றுவதாக உறுதி கூறல்.*

इत्युक्ताः सीतया घोरं राक्षस्यः क्रोधमूर्च्छिताः । काश्चिज्जग्मुस्तदाख्यातुं रावणस्य दुरात्मनः ॥ 1
ततः सीतामुपागम्य राक्षस्यो भीमदर्शनाः । पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ 2
अद्येदानीं तवानार्ये सीते पापविनिश्चये । राक्षस्यो भक्षयिष्यन्ति मांसमेतद्यथासुखम् ॥ 3

---

39.. கண்டால் ப்ரீதி, காணாவிட்டால் இல்லையென்பது நன்றி மறப்பவர்களின் செயல். ராமன் அப்படிச் செய்யமாட்டார்.

45. எவர்களுக்கு ப்ரியம், அப்ரியம் என்பவை கிடையாதோ அப்படிப்பட்ட பாபமற்ற இந்த்ரியங்களை வென்ற பாக்கியசாலிகளும், மஹாத்மாக்களுமான முனிவர்களே கொடுத்து வைத்தவர்கள்.

46. ப்ரியம் கிட்டினால் துக்கமின்மை. அப்ரியம் வந்தால் அதிக துக்கம். இவ்விரண்டினாலும் விடுபட்டிருக்கும் மஹாத்மாக்களின் பொருட்டு நமஸ்காரம்.

सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा। राक्षसी त्रिजटा वृद्धा प्रबुद्धा वाक्यमब्रवीत्॥ 4
आत्मानं खादतानार्या न सीतां भक्षयिष्यथ। जनकस्य सुतामिष्टां स्नुषां दशरथस्य च॥ 5
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः। राक्षसानामभावाय भर्तुरस्या भवाय च॥ 6
एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्च्छिताः। सर्वा एवाब्रुवन्भीतास्त्रिजटां तामिदं वचः॥ 7
कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि। तासां श्रुत्वा तु वचनं राक्षसीनां मुखोद्गतम्॥ 8
उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम्। गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम्॥ 9
युक्तां वाजिसहस्रेण स्वयमास्थाय राघवः। शुक्लमाल्याम्बरधरो लक्ष्मणेन समागतः॥ 10
स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता। सागरेण परिक्षिप्तं श्वेतपर्वतमास्थिता॥ 11
रामेण संगता सीता भास्करेण प्रभा यथा। राघवश्च पुनर्दृष्टश्चतुर्दन्तं महागजम्॥ 12
आरूढः शैलसंकाशं चकास सहलक्ष्मणः। ततस्तु सूर्यसंकाशौ दीप्यमानौ स्वतेजसा॥ 13
शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ। ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः॥ 14
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता। भर्तुरङ्कात्समुत्पत्य ततः कमललोचना।
चन्द्रसूर्यौ मया दृष्टा पाणिभ्यां परिमार्जती॥ 15
ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः। सीतया च विशालाक्ष्या लङ्काया उपरिस्थितः।
पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम्॥ 16
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः। ततोऽन्यत्र मया दृष्टो रामः सत्यपराक्रमः॥ 17
लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान्। आरुह्य पुष्पकं दिव्यं विमानं सूर्यसंनिभम्॥ 18
उत्तरां दिशमालोच्य प्रस्थितः पुरुषोत्तमः। रावणश्च मया दृष्टो मुण्डस्तैलसमुक्षितः॥ 19
रक्तवासाः पिबन्मत्तः करवीरकृतस्रजः। विमानात्पुष्पकादद्य रावणः पतितः क्षितौ॥ 20
कृश्यमाणः स्त्रिया मुण्डो दृष्टः कृष्णाम्बरः पुनः। रथेन खरयुक्तेन रक्तमाल्यानुलेपनः॥ 21
पिबंस्तैलं हसन्नृत्यन्भ्रान्तचित्ताकुलेन्द्रियः। गर्दभेन ययौ शीघ्रं दक्षिणां दिशमाश्रितः॥ 22
पुनरेव मया दृष्टो रावणो राक्षसेश्वरः। पतितो विशिरा भूमौ गर्दभाद्भयमोहितः॥ 23
सहसोत्थाय संभ्रान्तो भयार्तो मदविह्वलः। उन्मत्तरूपो दिग्वासा दुर्वाक्यं प्रलपन्बहु॥ 24
दुर्गन्धं दुःसहं घोरं तिमिरं नरकोपमम्। मलपङ्कं प्रविश्याशु मग्नस्तत्र स रावणः॥ 25
कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी। काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति॥ 26
एवं तत्र मया दृष्टः कुम्भकर्णो महाबलः। रावणस्य सुताः सर्वे मुण्डास्तैलसमुक्षिताः॥ 27
वराहेण दशग्रीवः शिशुमारेण चेन्द्रजित्। उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम्॥ 28
एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः। चतुर्भिः सचिवैः सार्धं वैहायसमुपस्थितः॥ 29
समाजश्च महान्वृत्तो गीतवादित्रनिःस्वनः। पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम्॥ 30
लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा। सागरे पतिता दृष्टा भग्नगोपुरतोरणा॥ 31
पीत्वा तैलं प्रमत्ताश्च प्रहसन्त्यो महास्वनाः। लङ्कायां भस्मरूक्षायां सर्वा राक्षसयोषितः॥ 32

कुम्भकर्णादयश्चेमे सर्वे राक्षसपुंगवाः । रक्तं निवसनं गृह्य प्रविष्टा गोमयहृदम् ॥ 33
अपगच्छत पश्यध्वं सीतामाप्नोति राघवः । घातयेत्परमामर्षी युष्मान्सार्धं हि राक्षसैः ॥ 34
प्रियां बहुमतां भार्यां वनवासमनुव्रताम् । भर्त्सितां तर्जितां वापि नानुमंस्यति राघवः ॥ 35
तदलं क्रूरवाक्यैश्च सान्त्वमेवाभिधीयताम् । अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ 36
यस्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते । सा दुःखैर्बहुभिर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम् ॥ 37
भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया । राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ॥ 38
प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा । अलमेषा परित्रातुं राक्षसीर्महतो भयात् ॥ 39
अपि चास्या विशालाक्ष्या न किंचिदुपलक्षये । विरूपमपि चाङ्गेषु सुसूक्ष्ममपि लक्षणम् ॥ 40
छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम् । अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् ॥ 41
अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थिताम् । राक्षसेन्द्रविनाशं च विजयं राघवस्य च ॥ 42
निमित्तभूतमेतत्तु श्रोतुमस्या महत्प्रियम् । दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवायतम् ॥ 43
ईषच्च हृषितो वास्या दक्षिणाया ह्यदक्षिणः । अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते ॥ 44
करेणुहस्तप्रतिमः सव्यश्चोरुरनुत्तमः । वेपन्कथयतीवास्या राघवं पुरतः स्थितम् ॥ 45

पक्षी च शाखानिलयं प्रविष्टः पुनः पुनश्चोत्तमसान्त्ववादी ।
सुस्वागतां वाचमुदीरयाणः पुनः पुनश्चोदयतीव हृष्टः ॥ 46

ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता । अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ॥ 47

इति पञ्चविंशः सर्गः ॥

## इतः परं द्वौ सर्गौ (प्रा. सं. 28, 29) प्रक्षिप्तौ ॥

प्रा. सं. 25, 26 सर्गयोः सीतायाः शोकप्रलापः प्राणत्यागव्यवसायश्च विस्तरेण वर्णितः कविना । तत्र "आत्मच्छन्देन जीवितं परित्यक्तुं न शक्यं" (25-20) "ध्रुवं मां प्रातराशार्थं राक्षसः कल्पयिष्यति" (26-33) "प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम्" (26-47) इत्येवं निश्चितवती सीता । ततः सप्तविंशे सर्गे स्वापोद्बुद्धा त्रिजटा स्वदृष्टस्वप्नवृत्तान्तत्वेन राघवात् राक्षसानामुपस्थितं घोरं भयं कथयित्वा "सीतां शरणमन्विच्छत" इति राक्षसीरादिशति । तदैव सीताया अङ्गेषु शुभनिमित्तानि त्रिजटा ददर्श । अब्रवीच्च राक्षसीभ्यः ॥

तत्क्षणमेव सीतापि सन्तुष्टहृदया "वः शरणं भवेयं" इति प्रतिश्रुतवतीति गोविन्दराजीयातिरिक्तेषु बहुषु कोशेषु दृश्यते । एवमेव हनुमानपि स्वसहचरेभ्यः उक्तवान् प्रत्यागमने 58 सर्गे । एतत् सर्वेषु कोशेषूपलभ्यते ॥

एवं स्थिते निमित्तानुभवात्परं हृष्टायाः पुनरुद्बन्धनव्यवसायोऽसंगत एव प्रतिभाति । शुभनिमित्तोत्पत्तावेव मनसस्तुष्टिः संजायेत । ततः परं उद्बन्धनप्रवृत्तिः (सर्गः 28) ततोपि परं निमित्तवर्णनं ततो हर्षप्राप्तिवर्णनं च (सर्गः 29) पौनरुक्त्यं दर्शयति ॥

वंगदेशसंस्करणेतु सीतायाः उद्बंधनप्रवृत्तिकथा, न दृश्यते। किंतु अष्टाविंशस्य सर्गस्य आद्या दशश्लोकाः एकोनत्रिंशस्य सप्तश्लोकाः (पंचमं श्लोकं विना) च आहत्य सप्तदशश्लोकाः एकस्मिन्नेव सर्गे मुद्रिताः दृश्यन्ते ॥

सप्तविंशे सर्गे त्रिजटया यानि निमित्तानि दृष्टानि तान्येव एकोनत्रिंशे अष्टभिः श्लोकैः वर्ण्यन्ते। तेषां श्लोकानां "पक्षीचशाखानिलयं प्रविष्टः" इति श्लोकात्परं अवस्थानं कथंचित् युक्तं भवेत् ॥

पंडित नटेशशास्त्रिणां द्राविडानुवादे अष्टाविंशसर्गप्रारंभे एवं दृश्यते। "सर्गोऽयं अनन्तरश्च क्वचिन्मातृकासु न दृश्येते। नाप्येतौ संगतौ। न चानयोः परित्यागे कथा विच्छिद्यते" इति ॥

अतः सर्गाविमौ प्रक्षिप्तौ इत्येव युक्तम् ॥

## ப்ராசீன ஸம்ஸ்கரணரீத்யா 28, 29 ஸர்க்கங்கள்.

25, 26 ஸர்க்கங்களில் ஸீதை துக்கம் தாங்காமல் புலம்பித் தவித்து, "என்னிஷ்டப்படி பிராணனை விடமுடியவில்லையே! ராவணன் வைத்த கெடு நெருங்குகிறதே! அவன் காலை ஆகாரத்துக்கு என்னை சமைத்துவிடப் போகிறார்களே! பிரியமுள்ள ராமனால் கைவிடப்பட்ட நான் ராவணனாலேயே சாகிறேன்" என்று முடிவுகட்டிக்கொண்டிருக்கையில், 27-வது ஸர்க்கத்தில் தூக்கத்தினின்று எழுந்த திரிஜடை, ராமனால் ராக்ஷஸர்கள் அழியப்போவதாகத் தான் கண்ட கனவுகளைக் கூறி, ஸீதையை சரணடையும்படி அங்குள்ள ராக்ஷஸிகளைத் தூண்டுகிறாள். உடனேயே ஸீதையின் அங்கங்களில் அப்போதே காணப்படும் சுப நிமித்தங்களையும் திரிஜடை விவரிக்கிறாள். அந்தக்ஷணமே ஸீதை ஸந்தோஷமடைந்து, "உங்களைக் காப்பாற்றுகிறேன்" என்று ராக்ஷஸிகளுக்கு உறுதிகூறியதாக ஸ்ரீ கோவிந்தராஜர் தவிர பல பதிப்புகளில் காணப்படுகிறது. இப்படியே தான் பின் ஆஞ்சநேயர் திரும்பிவந்து 58-வது ஸர்க்கத்தில் தன் ஸகாக்களிடமும் கூறுகிறார். இது ஸ்ரீ கோவிந்தராஜர் உள்பட எல்லாப் பதிப்புகளிலுமிருக்கிறது. ஆகவே, ஸீதை ஸந்தோஷமடைந்து அபயங்கொடுத்தது உறுதியாகிறது.

இதன் பின்பு ஸீதை தூக்குப் போட்டுக்கொள்ளப் போனதாகவிருக்கும் 28-வது ஸர்க்கக் கதை முற்றிலும் பொருத்தமில்லை. ஸீதை தூக்குப் போட்டுக்கொள்ள மரக்கிளையைப் பிடித்ததும் அவளங்கங்களில் சுப நிமித்தங்களுண்டானதாக 28-வது ஸர்க்கத்தில் முடிக்கப்பட்டு, அவைகளையே 29-வது ஸர்க்கத்தில் 8 பெரிய ச்லோகங்களால் வர்ணித்து, அதன் மூலம் ஸீதை ஸந்தோஷமடைந்ததாகக் கூறப்பட்டிருக்கிறது.

ஸீதையின் அங்கங்களில் காணப்பட்ட சுப நிமித்தங்களைத்தான் 27-வது ஸர்க்கத்தில் திரிஜடை கூறினாள். நிமித்தங்கள் ஏற்பட்டவுடனேயே ஸந்தோஷமுண்டாயிருப்பதுதான் கிரமம்.

ஆகையால் 28, 29 ஸர்க்கங்கள் பொருத்தமில்லாததுடன் சொன்னதைத் திருப்பிச் சொல்வதாயுமிருக்கிறது.

வங்காள தேசப் பதிப்பில் ஸீதை தூக்குப் போட்டுக்கொள்ளப்போன கதையில்லை. அதற்கனுகுணமாய் 28-வது ஸர்க்கத்தில் 11 முதலுள்ள ச்லோகங்களும், 29-வது ஸர்க்கத்தில்

5-வது ச்லோகமும் அப்பதிப்பிலில்லே. பாக்கி 28-வது ஸர்க்கம் 10 ச்லோகங்களும், 29-வது ஸர்க்கம் 7 ச்லோகங்களும் ஒரே ஸர்க்கமாயிருக்கிறது.

27-வது ஸர்க்கக் கடைசியில் „ வக்ஷீ வ ஶாவாமியம் ப்ரவிஷ்ட:" என்ற ச்லோகத்தைத் தொடர்ந்து 29-வது ஸர்க்க ச்லோகங்களிருந்தால் ஒருவாறு பொருத்தமாயிருக்கலாம்.

1911-ல் பதிப்பிக்கப்பட்ட பண்டித நடேச சாஸ்திரியாரின் தமிழ்மொழி பெயர்ப்பில் 28-வது ஸர்க்க ஆரம்பத்தில் பின்கண்டபடி குறிப்பு காணப்படுகிறது:-

" இதுவும் அடுத்த ஸர்க்கமும் சில பிரதிகளிலில்லே. இவை முன் பின் பொருத்தமுமில்லே. இவற்றை நீக்கிவிடுவதனல் கதைக்கு ஒரு குறைவு வருவதுமில்லே."

27-வது ஸர்க்கத்தைத் தொடர்ந்து 30-வது ஸர்க்கம்தான் முற்றிலும் பொருத்தமாயிருக்கிறது. ஆகையால் 28, 29 ஸர்க்கங்களைப் பின்னல் சேர்க்கப்பட்டவையென்று கொள்வதே உசிதம்.

---

## प्राचीनसंस्करणरीत्या अष्टाविंशः सर्गः ॥

### पुनरुद्बन्धनप्रवृत्तिः ॥

ஸீதை மறுபடியும் தூக்குப்போட்டுக்கொள்ள முயலுதல்.

सा राक्षसेन्द्रस्य वचो निशम्य तद्रावणस्याप्रियमप्रियार्ता ।
सीता वितत्रास यथा वनान्ते सिंहाभिपन्ना गजराजकन्या ॥ 1
सा राक्षसीमध्यगता च भीरुर्वाग्भिर्भृशं रावणतर्जिता च ।
कान्तारमध्ये विजने विसृष्टा बालेव कन्या विललाप सीता ॥ 2
सत्यं बतेदं प्रवदन्ति लोके नाकालमृत्युर्भवतीति सन्तः ।
यत्राहमेवं परिभर्त्स्यमाना जीवामि यस्मात्क्षणमप्यपुण्या ॥ 3
सुखाद्विहीनं बहुदुःखपूर्णमिदं तु नूनं हृदयं स्थिरं मे ।
विदीर्यते यन्न सहस्रधाद्य वज्राहतं शृङ्गमिवाचलस्य ॥ 4
नैवास्ति दोषो मम नूनमत्र वध्याहमस्याप्रियदर्शनस्य ।
भावं न चास्याहमनुप्रदातुमलं द्विजो मन्त्रमिवाद्विजाय ॥ 5
तस्मिन्ननागच्छति लोकनाथे गर्भस्य जन्तोरिव शल्यकृन्तः ।
नूनं ममाङ्गान्यचिरादनार्यः शरैः शितैश्छेत्स्यति राक्षसेन्द्रः ॥ 6
दुःखं बतेदं ननु दुःखिताया मासौ चिरायाभिगमिष्यतो द्वौ ।
बद्धस्य वध्यस्य तथा निशान्ते राजोपरोधादिव तस्करस्य ॥ 7
हा राम हा लक्ष्मण हा सुमित्रे हा राममातः सह मे जनन्यः ।
एषा विपद्याम्यहमल्पभाग्या महार्णवे नौरिव मूढवाता ॥ 8

तरस्विनौ धारयता मृगस्य सत्त्वेन रूपं मनुजेन्द्रपुत्रौ ।
नूनं विशस्तौ मम कारणात्तौ सिंहर्षभौ द्वाविव वैद्युतेन ॥ 9
नूनं स कालो मृगरूपधारी मामल्पभाग्यां लुलुभे तदानीम् ।
यत्रार्यपुत्रं विससर्ज मूढा रामानुजं लक्ष्मणपूर्वजं च ॥ 10
हा राम सत्यव्रत दीर्घबाहो हा पूर्णचन्द्रप्रतिमानवक्त्र ।
हा जीवलोकस्य हितः प्रियश्च वध्यां न मां वेत्सि हि राक्षसानाम् ॥ 11
अनन्यदेवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे ।
पतिव्रतात्वं विफलं ममेदं कृतं कृतघ्नेष्विव मानुषाणाम् ॥ 12
मोघं हि धर्मश्चरितो ममायं तथैकपत्नीत्वमिदं निरर्थम् ।
या त्वां न पश्यामि कृशा विवर्णा हीना त्वया संगमने निराशा ॥ 13
पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च ।
स्त्रीभिस्तु मन्ये विपुलेक्षणाभिः संरंस्यसे वीतभयः कृतार्थः ॥ 14
अहं तु राम त्वयि जातकामा चिरं विनाशाय निबद्धभावा ।
मोघं चरित्वाथ तपो व्रतं च त्यक्ष्यामि धिग्जीवितमल्पभाग्या ॥ 15
सा जीवितं क्षिप्रमहं त्यजेयं विषेण शस्त्रेण शितेन वापि ।
विषस्य दाता न तु मेऽस्ति कश्चिच्छस्त्रस्य वा वेश्मनि राक्षसस्य ॥ 16
शोकाभितप्ता बहुधा विचिन्त्य सीताथ वेणीग्रथनं गृहीत्वा ।
उद्बद्ध्य वेण्युद्ग्रथनेन शीघ्रमहं गमिष्यामि यमस्य मूलम् ॥ 17
उपस्थिता सा मृदुसर्वगात्री शाखां गृहीत्वा च नगस्य तस्य ।
तस्यास्तु रामं परिचिन्तयन्त्या रामानुजं स्वं च कुलं शुभाङ्ग्याः ॥ 18
शोकानिमित्तानि तथा बहूनि धैर्यार्जितानि प्रवराणि लोके ।
प्रादुर्निमित्तानि तदा बभूवुः पुरापि सिद्धान्युपलक्षितानि ॥ 19

इति प्रा० सं० अष्टाविंशः सर्गः ॥

---

## प्राचीनसंस्करणरीत्या एकोनत्रिंशः सर्गः ॥

### शुभनिमित्तानां विवरणम् ॥

*ஸீதை கண்ட நற்சகுனங்களை விவரித்தல்.*

तथागतां तां व्यथितामनिन्दितां व्यपेतहर्षां परिदीनमानसाम् ।
शुभां निमित्तानि शुभानि भेजिरे नरं श्रिया जुष्टमिवोपसेविनः ॥ 1

तस्याः शुभं वाममरालपक्ष्मराज्यावृतं कृष्णविशालशुक्लम् ।
प्रास्पन्दतैकं नयनं सुकेश्या मीनाहतं पद्ममिवाभिताम्रम् ॥ 2
भुजश्च चार्वञ्चितवृत्तपीनः परार्ध्यकालागरुचन्दनार्हः ।
अनुत्तमेनाध्युषितः प्रियेण चिरेण वामः समवेपताशु ॥ 3
गजेन्द्रहस्तप्रतिमश्च पीनस्तयोर्द्वयोः संहतयोः सुजातः ।
प्रस्पन्दमानः पुनरूरुरस्या रामं पुरस्तात्स्थितमाचचक्षे ॥ 4
शुभं पुनर्हेमसमानवर्णमीषद्रजोध्वस्तमिवातुलाक्ष्याः ।
वासः स्थितायाः शिखराग्रदन्त्याः किंचित्परिस्रंसत चारुगात्र्याः ॥ 5
एतैर्निमित्तैरपरैश्च सुभ्रूः संचोदिता प्रागपि साधुसिद्धैः ।
वातातपक्लान्तमिव प्रणष्टं वर्षेण बीज प्रतिसंजहर्ष ॥ 6
तस्याः पुनर्बिम्बफलोपमोष्ठं स्वक्षिभ्रुकेशान्तमरालपक्ष्म ।
वक्त्रं बभासे सितशुक्लदंष्ट्रं राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥ 7
सा वीतशोका व्यपनीततन्द्रा शान्तज्वरा हर्षविबुद्धसत्त्वा ।
अशोभतार्या वदनेन शुक्ले शीतांशुना रात्रिरिवोदितेन ॥ 8

इति प्रा० सं० एकोनत्रिंशः सर्गः ॥

---

## अथ षड्विंशः सर्गः ॥ (प्रा. सं. 30)

हनुमता सीता समाश्वासनप्रकारनिश्चयः ॥

*ஸீதையிடம் எவ்வாறு பேசித் தேற்றுவது என்று ஹநுமான் யோஜித்துத் தீர்மானித்தல்.*

हनुमानपि विश्रान्तः सर्वं शुश्राव तत्त्वतः । सीतायास्त्रिजटायाश्च राक्षसीनां च तर्जितम् ॥ 1
अवेक्षमाणस्तां देवीं देवतामिव नन्दने । ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ 2
यां कपीनां सहस्राणि सुबहून्ययुतानि च । दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ 3
चारेण तु सुयुक्तेन शत्रोः शक्तिमवेक्षता । गूढेन चरता तावदवेक्षितमिदं मया ॥ 4
राक्षसानां विशेषश्च पुरी चेयं निरीक्षता । राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥ 5
युक्तं तस्याप्रमेयस्य सर्वसत्त्वदयावतः । समाश्वासयितुं भार्यां पतिदर्शनकाङ्क्षिणीम् ॥ 6
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् । अदृष्टदुःखां दुःखस्य न ह्यन्तमधिगच्छतीम् ॥ 7
यदि ह्यहं सतीमेनां शोकोपहतचेतनाम् । अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ॥ 8
गते हि मयि तत्रेयं राजपुत्री यशस्विनी । परित्राणमपश्यन्ती जानकी जीवितं त्यजेत् ॥ 9

यथा च स महाबाहुः पूर्णचन्द्रनिभाननः । समाश्वासयितुं न्याय्यः सीतादर्शनलालसः ॥ 10
निशाचरीणां प्रत्यक्षमक्षमं चाभिभाषितम् । कथं नु खलु कर्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥ 11
अनेन रात्रिशेषेण यदि नाश्वास्यते मया । सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितम् ॥ 12
रामस्तु यदि पृच्छेन्मां किं मां सीताब्रवीद्वचः । किमहं तं प्रतिब्रूयामसंभाष्य सुमध्यमाम् ॥ 13
सीतासंदेशरहितं मामितस्त्वरया गतम् । निर्दहेदपि काकुत्स्थः क्रोधतीव्रेण चक्षुषा ॥ 14
अन्तरं त्वहमासाद्य राक्षसीनामवस्थितः । शनैराश्वासयाम्यद्य संतापबहुलामिमाम् ॥ 15
अहं ह्यतितनुश्चैव वानरश्च विशेषतः । वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥ * 16
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् । रावणं मन्यमाना मां सीता भीता भविष्यति ॥ 17
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् । मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ॥ 18
सेयमालोक्य मे रूपं जानकी भाषितं तथा । रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासमुपैष्यति ॥ 19
ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी । जानाना मां विशालाक्षी रावणं कामरूपिणम् ॥ 20
सीतया च कृते शब्दे सहसा राक्षसीगणः । नानाप्रहरणो घोरः समेयादन्तकोपमः ॥ 21
ततो मां संपरिक्षिप्य सर्वतो विकृताननाः । वधे च ग्रहणे चैव कुर्युर्यत्नं महाबलाः ॥ 22
तं मां शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनाम् । दृष्ट्वा च परिधावन्तं भवेयुः परिशङ्किताः ॥ 23
मम रूपं च संप्रेक्ष्य वने विचरतो महत् । राक्षस्यो भयवित्रस्ता भवेयुर्विकृतस्वराः ॥ 24
ततः कुर्युः समाह्वानं राक्षस्यो रक्षसामपि । राक्षसेन्द्रनियुक्तानां राक्षसेन्द्रनिवेशने 25
ते शूलशरनिस्त्रिंशविविधायुधपाणयः । आपतेयुर्विमर्देऽस्मिन्वेगेनोद्वेगकारणात् ॥ 26
मां वा गृह्णीयुराप्लुत्य बहवः शीघ्रकारिणः । स्यादियं चागृहीतार्था मम च ग्रहणं भवेत् ॥ 27
हिंसाभिरुचयो हिंस्युरिमां वा जनकात्मजाम् । विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम् ॥ 28
उद्देशे नष्टमार्गेऽस्मिन्राक्षसैः परिवारिते । सागरेण परिक्षिप्ते गुप्ते वसति जानकी ॥ 29
विशस्ते वा गृहीते वा रक्षोभिर्मयि संयुगे । नाशं पश्यामि रामस्य सहायं कार्यसाधने ॥ 30
विमृशंश्च न पश्यामि यो हते मयि वानरः । शतयोजनविस्तीर्णं लङ्घयेत महोदधिम् ॥ 31
कामं हन्तुं समर्थोऽस्मि सहस्राण्यपि रक्षसाम् । न तु शक्ष्याम्यहं प्राप्तुं परं पारं महोदधेः ॥ 32
असत्यानि च युद्धानि संशयो मे न रोचते । कश्च निःसंशयं कार्यं कुर्यात्प्राज्ञः ससंशयम् ॥ * 33

16-18. ஸீதையிடம் எந்த பாஷையில் பேசுவதென்று யோஜித்து நிர்ணயிக்கிறார்:— "ஸாதாரண மனிதர்கள் பேசும் ஸம்ஸ்கிருதத்திலேயே பேசுகிறேன். பிராம்ஹணர்கள் கையாளும் ஸம்ஸ்கிருதத்தையுபயோகிப்பேனாகில் என்னை ராவணனாக நினைத்து ஸீதை அச்சமடைவாள். அவச்யம் மனிதர்கள் பேசும் அர்த்தபுஷ்டியுள்ள வாக்கியங்களில் தான் பேசவேண்டும்.

33. எதிரில் நின்று பேசினால் வரும் விளைவுகளைக் கூறுகையில் இதுவும் ஒன்று:— "யுத்தத்தில் ஜயமென்பது நிச்சயமில்லை. ஸந்தேகமான காரியத்தில் எனக்கு விருப்பமில்லை. எந்தப் புத்திமான்தான் ஸந்தேகமில்லாத காரியத்தை ஸந்தேகமுள்ளதாகச் செய்துகொள்வான்!

एष दोषो महान्हि स्यान्मम सीताभिभाषणे । प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ॥ 34
कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत च । इति संचिन्त्य हनुमांश्चकार मतिमान्मतिम् ॥ 35
राममक्लिष्टकर्माणं सुबन्धुमनुकीर्तयन् । नैनामुद्वेजयिष्यामि तद्बन्धुगतचेतनाम् ॥ 36
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः । शुभानि धर्मयुक्तानि वचनानि समर्पयन् ॥ 37
श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन्गिरम् । श्रद्धास्यति यथा सीता तथा सर्वं समादधे ॥ 38

इति स बहुविधं महाप्रभावो जगतिपतेः प्रमदामवेक्षमाणः ।
मधुरमवितथं जगाद वाक्यं द्रुमविटपान्तरमास्थितो हनूमान् ॥ 39

इति षड्विंशः सर्गः ॥

## अथ सप्तविंशः सर्गः ॥ (प्रा. सं. 31)

हनुमता रामवृत्तान्तकथनं सीतया तच्छ्रवणं च ॥

*ஹநுமான் கூறிய ராமனது வரலாற்றை ஸீதை கேட்டல்.*

एवं बहुविधां चिन्तां चिन्तयित्वा महामतिः । संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ 1
राजा दशरथो नाम रथकुञ्जरवाजिमान् । पुण्यशीलो महाकीर्तिरिक्ष्वाकूणां महायशाः ॥ 2
राजर्षीणां गुणश्रेष्ठस्तपसा चर्षिभिः समः । चक्रवर्तिकुले जातः पुरन्दरसमो बले ॥ 3
अहिंसारतिरक्षुद्रो घृणी सत्यपराक्रमः । मुख्यस्येक्ष्वाकुवंशस्य लक्ष्मीवाँल्लक्ष्मिवर्धनः ॥ 4
पार्थिवव्यञ्जनैर्युक्तः पृथुश्रीः पार्थिवर्षभः । पृथिव्यां चतुरन्तायां विश्रुतः सुखदः सुखी ॥ 5
तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः । रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥ 6
रक्षिता स्वस्य वृत्तस्य स्वजनस्यापि रक्षिता । रक्षिता जीवलोकस्य धर्मस्य च परंतपः ॥ 7
तस्य सत्याभिसंधस्य वृद्धस्य वचनात्पितुः । सभार्यः सह च भ्रात्रा वीरः प्रव्राजितो वनम् ॥ 8
तेन तत्र महारण्ये मृगयां परिधावता । राक्षसा निहताः शूरा बहवः कामरूपिणः ॥ 9
जनस्थानवधं श्रुत्वा निहतौ खरदूषणौ । ततस्त्वमपापहृता जानकी रावणेन तु ॥ 10
वञ्चयित्वा वने रामं मृगरूपेण मायया । स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम् ॥ 11
आससाद वने मित्रं सुग्रीवं नाम वानरम् । ततः स वालिनं हत्वा रामः परपुरंजयः ॥ 12
आयच्छत्कपिराज्यं तु सुग्रीवाय महात्मने । सुग्रीवेणाभिसंदिष्टा हरयः कामरूपिणः ॥ 13
दिक्षु सर्वासु तां देवीं विचिन्वन्तः सहस्रशः । अहं संपातिवचनाच्छतयोजनमायतम् ॥ 14
तस्या हेतोर्विशालाक्ष्याः समुद्रं वेगवान्प्लुतः । यथारूपां यथावर्णां यथालक्ष्मवतीं च ताम् ॥ 15
अश्रौषं राघवस्याहं सेयमासादिता मया । विररामैवमुक्त्वा स वाचं वानरपुंगवः ॥ 16

जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता । ततः सा वक्रकेशान्ता सुकेशी केशसंवृतम् ।
उन्नम्य वदनं भीरुः शिंशपामन्ववैक्षत ॥ 17

निशम्य सीता वचनं कपेश्च दिशश्च सर्वाः प्रतिशश्च वीक्ष्य ।
स्वयं प्रहर्षं परमं जगाम सर्वात्मना राममनुस्मरन्ती ॥ 18

सा तिर्यगूर्ध्वं च तथा ह्यधस्तान्निरीक्षमाणा तमचिन्त्यबुद्धिम् ।
ददर्श पिङ्गाधिपतेरमात्यं वातात्मजं सूर्यमिवोदयस्थम् ॥ 19

इति सप्तविंशः सर्गः ॥

## अथ अष्टाविंशः सर्गः ॥ (प्रा. सं. 32)

हनुमद्दर्शनेन सीतावितर्कः ॥

*ஸீதை ஹநுமானைப் பார்த்து பலவாறு யோஜித்தல்.*

ततः शाखान्तरे लीनं दृष्ट्वा चलितमानसा । वेष्टितार्जुनवस्त्रं तं विद्युत्संघातपिङ्गलम् ॥ 1
सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् । फुल्लाशोकोत्कराभासं तप्तचामीकरेक्षणम् ॥ 2
मैथिली चिन्तयामास विस्मयं परमं गता । अहो भीममिदं सत्त्वं वानरस्य दुरासदम् ॥ 3
दुर्निरीक्ष्यमिति ज्ञात्वा पुनरेव मुमोह सा । विललाप भृशं सीता करुणं भयमोहिता ॥ 4
रामरामेति दुःखार्ता लक्ष्मणेति च भामिनी । रुरोद सहसा सीता मन्दमन्दस्वरा सती ॥ 5
साथ दृष्ट्वा हरिवरं विनीतवदुपस्थितम् । मैथिली चिन्तयामास स्वप्नोऽयमिति भामिनी ॥ 6

सा वीक्षमाणा पृथुभग्नवक्त्रं शाखामृगेन्द्रस्य यथोक्तकारम् ।
ददर्श पिङ्गप्रवरं महार्हं वातात्मजं बुद्धिमतां वरिष्ठम् ॥ 7

सा तं समीक्ष्यैव भृशं विसंज्ञा गतासुकल्पेव बभूव सीता ।
चिरेण संज्ञां प्रतिलभ्य भूयः विचिन्तयामास विशालनेत्रा ॥ 8

स्वप्ने मयायं विकृतोऽद्य दृष्टः शाखामृगः शास्त्रगणैर्निषिद्धः ।
स्वस्त्यस्तु रामाय सलक्ष्मणाय तथा पितुर्मे जनकस्य राज्ञः ॥ 9

स्वप्नोऽपि नायं नहि मेऽस्ति निद्रा शोकेन दुःखेन च पीडितायाः ।
सुखं हि मे नास्ति यतो विहीना तेनेन्दुपूर्णप्रतिमाननेन ॥ 10

रामेति रामेति सदैव बुद्ध्या विचिन्त्य वाचा ब्रुवती तमेव ।
तस्यानुरूपं च कथां तदर्थामेवं प्रपश्यामि तथा शृणोमि ॥ 11

अहं हि तस्याद्य मनोभवेन संपीडिता तद्गतसर्वभावा ।
विचिन्तयन्ती सततं तमेव तथैव पश्यामि तथा शृणोमि ॥ 12
मनोरथः स्यादिति चिन्तयामि तथापि बुद्ध्यापि वितर्कयामि ।
किं कारणं तस्य हि नास्ति रूपं सुव्यक्तरूपश्च वदत्ययं माम् ॥ 13
नमोऽस्तु वाचस्पतये सवज्रिणे स्वयंभुवे चैव हुताशनाय च ।
अनेन चोक्तं यदिदं ममाग्रतो वनौकसा तच्च तथास्तु नान्यथा ॥ 14

इति अष्टाविंशः सर्गः ॥

## अथ एकोनत्रिंशः सर्गः ॥ (प्रा. सं. 33)

हनुमत्प्रश्नः सीताप्रत्युत्तरं च ॥

*ஹனுமான் ஸீதையின் எதிரில் வருதல்-ஸீதையை வினவுதல்*
*- ஸீதை தன் வரலாறு கூறல்.*

सोऽवतीर्य द्रुमात्तस्माद्विद्रुमप्रतिमाननः । विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ 1
तामब्रवीन्महातेजा हनूमान्मारुतात्मजः । शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥ 2
का नु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि । द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिता ॥ 3
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् । पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥ 4
सुराणामसुराणां वा नागगन्धर्वरक्षसाम् । यक्षाणां किंनराणां वा का त्वं भवसि शोभने ॥ 5
का त्वं भवसि रुद्राणां मरुतां वा वरानने । वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ 6
किं नु चन्द्रमसा हीना पतिता विबुधालयात् । रोहिणी ज्योतिषां श्रेष्ठा श्रेष्ठा सर्वगुणाधिका ॥ 7
कोपाद्वा यदि वा मोहाद्भर्तारमसितेक्षणे । वसिष्ठं कोपयित्वा त्वं वासि कल्याण्यरुन्धती ॥ 8
रोदनादतिनिःश्वासाद्भूमिसंस्पर्शनादपि । न त्वा देवीमहं मन्ये राज्ञः संज्ञावधारणात् ॥ 9
व्यञ्जनानि हि ते यानि लक्षणानि च लक्षये । महिषी भूमिपालस्य राजकन्या च मे मता ॥ 10
रावणेन जनस्थानाद्बलात्प्रमथिता यदि । सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ॥ 11
यथा हि तव वै दैन्यं रूपं चाप्यतिमानुषम् । तपसा चान्वितो वेषस्त्वं राममहिषी ध्रुवम् ॥ 12
सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता । उवाच वाक्यं वैदेही हनूमन्तं द्रुमाश्रितम् ॥ 13
पृथिव्यां राजसिंहानां मुख्यस्य विदितात्मनः । स्नुषा दशरथस्याहं शत्रुसैन्यप्रणाशिनः ॥ 14
दुहिता जनकस्याहं वैदेहस्य महात्मनः । सीतेति नाम्ना चोक्ताहं भार्या रामस्य धीमतः ॥ 15
समा द्वादश तत्राहं राघवस्य निवेशने । भुञ्जाना मानुषान्भोगान्सर्वकामसमृद्धिनी ॥ 16
ततस्त्रयोदशे वर्षे राज्ये चेक्ष्वाकुनन्दनम् । अभिषेचयितुं राजा सोपाध्यायः प्रचक्रमे ॥ 17

तस्मिन्संभ्रियमाणे तु राघवस्याभिषेचने । कैकेयी नाम भर्तारमिदं वचनमब्रवीत् ॥ 18
न पिबेयं न खादेयं प्रत्यहं मम भोजनम् । एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ 19
यत्तदुक्तं त्वया वाक्यं प्रीत्या नृपतिसत्तम । तच्चेन्न वितथं कार्यं वनं गच्छतु राघवः ॥ 20
स राजा सत्यवाग्देव्या वरदानमनुस्मरन् । मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरमप्रियम् ॥ 21
ततस्तं स्थविरो राजा सत्यधर्मे व्यवस्थितः । ज्येष्ठं यशस्विनं पुत्रं रुदन्राज्यमयाचत ॥ 22
स पितुर्वचनं श्रीमानभिषेकात्परं प्रियम् । मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ॥ * 23
दद्यान्न प्रतिगृह्णीयात्सत्यं ब्रूयान्न चानृतम् । अपि जीवितहेतोर्वा रामः सत्यपराक्रमः ॥ 24
स विहायोत्तरीयाणि महार्हाणि महायशाः । विसृज्य मनसा राज्यं जनन्यै मां समादिशत् ॥ 25
साहं तस्याग्रतस्तूर्णं प्रस्थिता वनचारिणी । नहि मे तेन हिनाया वासः स्वर्गेऽपि रोचते ॥ 26
प्रागेव तु महाभागः सौमित्रिर्मित्रनन्दनः । पूर्वजस्यानुयात्रार्थे कुशचीरैरलंकृतः ॥ 27
ते वयं भर्तुरादेशं बहुमान्य दृढव्रताः । प्रविष्टाः स्म पुरा दृष्टं वनं गम्भीरदर्शनम् ॥ 28
वसतो दण्डकारण्ये तस्याहममितौजसः । रक्षसापहृता भार्या रावणेन दुरात्मना ॥ 29
द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः । ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम्॥ 30

इति एकोनत्रिंशः सर्गः ॥

## अथ त्रिंशः सर्गः ॥ (प्रा. सं. 34)

हनुमति सीतायाः रावणत्वशंका तत्परिहारश्च ॥

*ஹனுமான் அருகே வந்ததும் "ராவணனோ" என்று ஸீதை சந்தேகித்தல் - ஹனுமான் சமாதானம் கூறல்.*

तस्यास्तद्वचनं श्रुत्वा हनूमान्हरिपुंगवः । दुःखादुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥ 1
अहं रामस्य संदेशाद्देवि दूतस्तवागतः । वैदेहि कुशली रामः स त्वां कौशलमब्रवीत् ॥ 2
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः । स त्वां दाशरथी रामो देवि कौशलमब्रवीत् ॥ 3
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः । कृतवाञ्छोकसंतप्तः शिरसा तेऽभिवादनम् ॥ 4
सा तयोः कुशलं देवी निशम्य नरसिंहयोः । प्रीतिसंहृष्टसर्वाङ्गी हनूमन्तमथाब्रवीत् ॥ 5
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ * 6

23. ஸீதை கூறுவது :— (காட்டுக்குச் செல்ல வேண்டுமென்ற) தகப்பனார் சொல்லை, அபிஷேகத்தைக் காட்டிலும் அதிக ப்ரியத்துடன் முதலில் மனதால் ஏற்று, பிறகு வாக்கினால் அங்கீகரித்தார்.

குறிப்பு:-ஸ்ரீவிஷ்ணுஸஹஸ்ரநாம பாஷ்யத்தில் ஸ்ரீமத் சங்கராச்சார்யாள் सुमुखः என்ற நாமத்துக்கு இந்த ச்லோகத்தை உதாஹரணமாகக் குறிப்பிட்டிருக்கிறார்.

6. "நூறு வருஷங்கள் சென்றாலும் உயிருடனிருந்தால் இன்பமடையலாம்" என்ற முதுமொழி ஸத்யமாகவே எனக்கு விளங்குகிறது.

तया समागमे तस्मिन्प्रीतिरुत्पादिताद्भुता। परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः॥ 7
तस्यास्तद्वचनं श्रुत्वा हनूमान्मारुतात्मजः। सीतायाः शोकदीनायाः समीपमुपचक्रमे॥ 8
यथा यथा समीपं स हनूमानुपसर्पति। तथा तथा रावणं सा तं सीता परिशङ्कते॥ 9
अहो धिग्दुष्कृतमिदं कथितं हि यदस्य मे। रूपान्तरमुपागम्य स एवायं हि रावणः॥ 10
तामशोकस्य शाखां तु विमुक्त्वा शोककर्शिता। तस्यामेवानवद्याङ्गी धरण्यां समुपाविशत्॥ 11
हनुमानपि दुःखार्तः तां दृष्ट्वा भयमोहिताम्। अवन्दत महाबाहुस्ततस्तां जनकात्मजाम्॥ 12
सा चैनं भयसंत्रस्ता भूयो नैनमुदैक्षत। तं दृष्ट्वा वन्दमानं च सीता शशिनिभानना॥ 13
अब्रवीद्दीर्घमुच्छ्वस्य वानरं मधुरस्वरा। मायां प्रविष्टो मायावी यदि त्वं रावणः स्वयम्॥ 14
उत्पादयसि मे भूयः संतापं तन्न शोभनम्। स्वं परित्यज्य रूपं यः परिव्राजकरूपवान्॥ 15
जनस्थाने मया दृष्टस्त्वं स एव हि रावणः। उपवासकृशां दीनां कामरूप निशाचर॥ 16
संतापयसि मां भूयः संतप्तां तन्न शोभनम्। अथवा नैतदेवं हि यन्मया परिशङ्कितम्॥ 17
मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात्। यदि रामस्य दूतस्त्वमागतो भद्रमस्तु ते॥ 18
पृच्छामि त्वां हरिश्रेष्ठ प्रिया रामकथा हि मे। गुणान्रामस्य कथय प्रियस्य मम वानर॥ 19
चित्तं हरसि मे सौम्य नदीकूलं यथा रयः। अहो स्वप्नस्य सुखता याहमेव चिराहृता॥ 20
प्रेषितं नाम पश्यामि राघवेण वनौकसम्। स्वप्नेऽपि यद्यहं वीरं राघवं सहलक्ष्मणम्॥ 21
पश्येयं नावसीदेयं स्वप्नोऽपि मम मत्सरी। नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम्॥ 22
न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम। किं नु स्याच्चित्तमोहोऽयं भवेद्वातगतिस्त्वियम्॥ 23
उन्मादजो विकारो वा स्यादियं मृगतृष्णिका। अथवा नायमुन्मादो मोहोऽप्युन्मादलक्षणः॥ 24
संबुध्ये चाहमात्मानमिमं चापि वनौकसम्। इत्येवं बहुधा सीता संप्रधार्य बलाबलम्॥ 25
रक्षसां कामरूपत्वान्मेने तं राक्षसाधिपम्। एतां बुद्धिं तदा कृत्वा सीता सा तनुमध्यमा॥ 26
न प्रतिव्याजहाराथ वानरं जनकात्मजा। सीताया शंकितं बुद्ध्वा हनूमान्मारुतात्मजः॥ 27
श्रोत्रानुकूलैर्वचनैस्तदा तां संप्रहर्षयन्। आदित्य इव तेजस्वी लोककान्तः शशी यथा॥ 28
राजा सर्वस्य लोकस्य देवो वैश्रवणो यथा। विक्रमेणोपपन्नश्च यथा विष्णुर्महायशाः॥ 29
सत्यवादी मधुरवाग्देवो वाचस्पतिर्यथा। रूपवान्सुभगः श्रीमान्कंदर्प इव मूर्तिमान्॥ 30
स्थानक्रोधःप्रहर्ता च श्रेष्ठो लोके महारथः। बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः॥ 31
अपक्रम्याश्रमपदान्मृगरूपेण राघवम्। शून्ये येनापनीतासि तस्य द्रक्ष्यसि तत्फलम्॥ 32
अचिराद्रावणं संख्ये यो वधिष्यति वीर्यवान्। क्रोधप्रमुक्तैरिषुभिर्ज्वलद्भिरिव पावकैः॥ 33
तेनाहं प्रेषितो दूतस्त्वत्सकाशमिहागतः। त्वद्वियोगेन दुःखार्तः स त्वां कौशलमब्रवीत्॥ 34
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः। अभिवाद्य महाबाहुः स त्वां कौशलमब्रवीत्॥ 35
रामस्य च सखा देवि सुग्रीवो नाम वानरः। राजा वानरमुख्यानां स त्वां कौशलमब्रवीत्॥ 36
नित्यं स्मरति ते रामः ससुग्रीवः सलक्ष्मणः। दिष्ट्या जीवसि वैदेहि राक्षसीवशमागता॥ 37

न चिराद्द्रक्ष्यसे रामं लक्ष्मणं च महाबलम् । मध्ये वानरकोटीनां सुग्रीवं चामितौजसम् ॥ 38
अहं सुग्रीवसचिवो हनूमान्नाम वानरः । प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिम् ॥ 39
कृत्वा मूर्ध्नि पदन्यासं रावणस्य दुरात्मनः । त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् ॥ 40
नाहमस्मि तथा देवि यथा मामवगच्छसि । विशङ्का त्यज्यतामेषा श्रद्धस्व वदतो मम ॥ 41

इति त्रिंशः सर्गः ॥

## अथ एकत्रिंशः सर्गः ॥ (प्रा. सं. 35)

हनुमता रामलक्ष्मणयोरङ्गलक्षणनिरूपणद्वारा प्रत्यायनम् ॥

*ஹனுமான் ராமலக்ஷ்மணர்களுடைய அங்க அடையாளங்களையும், தன் வரலாற்றையும் கூறி நம்பிக்கை உண்டாக்குதல்.*

तां तु रामकथां श्रुत्वा वैदेही वानरर्षभात् । उवाच वचनं सान्त्वमिदं मधुरया गिरा ॥ 1
क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् । वानराणां नराणां च कथमासीत्समागमः ॥ 2
यानि रामस्य चिह्नानि लक्ष्मणस्य च वानर । तानि भूयः समाचक्ष्व न मां शोकः समाविशेत् ॥ 3
कीदृशं तस्य संस्थानं रूपं तस्य च कीदृशम् । कथमूरू कथं बाहू लक्ष्मणस्य च शंस मे ॥ 4
एवमुक्तस्तु वैदेह्या हनूमान्मारुतात्मजः । ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ 5
जानन्ती बत दिष्ट्या मां वैदेहि परिपृच्छसि । भर्तुः कमलपत्राक्षि संस्थानं लक्ष्मणस्य च ॥ 6
यानि रामस्य चिह्नानि लक्ष्मणस्य च यानि वै । लक्षितानि विशालाक्षि वदतः शृणु तानि मे ॥ 7
रामः कमलपत्राक्षः पूर्णचन्द्रनिभाननः । रूपदाक्षिण्यसंपन्नः प्रसूतो जनकात्मजे ॥ 8
तेजसादित्यसंकाशः क्षमया पृथिवीसमः । बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥ 9
रक्षिता जीवलोकस्य स्वजनस्य च रक्षिता । रक्षिता स्वस्य वृत्तस्य धर्मस्य च परंतपः ॥ 10
रामो भामिनि लोकेऽस्मिन् चातुर्वर्ण्यस्य रक्षिता । मर्यादानां च लोकस्य कर्ता कारयिता च सः ॥ 11
अर्चिष्मानर्चितोऽत्यर्थं ब्रह्मचर्यव्रते स्थितः । साधूनामुपकारज्ञः प्रचारज्ञश्च कर्मणाम् ॥ 12
राजनीत्यां विनीतश्च ब्राह्मणानामुपासकः । ज्ञानवाञ्शीलसंपन्नो विनीतश्च परंतपः ॥ 13
यजुर्वेदविनीतश्च वेदविद्भिः सुपूजितः । धनुर्वेदे च वेदेषु वेदाङ्गेषु च निष्ठितः ॥ 14
विपुलांसो महाबाहुः कम्बुग्रीवः शुभाननः । गूढजत्रुः सुताम्राक्षो रामो नाम जनैः श्रुतः ॥ 15
दुन्दुभिस्वननिर्घोषः स्निग्धवर्णः प्रतापवान् । समश्च सुविभक्ताङ्गो वर्णं श्यामं समाश्रितः ॥ 16
त्रिस्थिरस्त्रिप्रलम्बश्च त्रिसमस्त्रिषु चोन्नतः । त्रिताम्रस्त्रिषु च स्निग्धो गम्भीरस्त्रिषु नित्यशः ॥ 17
त्रिवलीमांस्त्र्यवनतश्चतुर्व्यङ्गस्त्रिशीर्षवान् । चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुःसमः ॥ 18
चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः । महोष्ठहनुनासश्च पञ्चस्निग्धोऽष्टवंशवान् ॥ 19
दशपद्मो दशबृहत्त्रिभिर्व्याप्तो द्विशुक्लवान् । षडुन्नतो नवतनुस्त्रिभिर्व्याप्नोति राघवः ॥ 20

सत्यधर्मरतः श्रीमान्संग्रहानुग्रहे रतः । देशकालविभागज्ञः सर्वलोकप्रियंवदः ॥ 21
भ्राता तस्य च द्वैमात्रः सौमित्रिरमितप्रभः । अनुरागेण रूपेण गुणैश्चापि तथाविधः ॥ 22
ससुवर्णच्छविः श्रीमान्रामः श्यामो महायशाः । तावुभौ नरशार्दूलौ त्वद्दर्शनसमुत्सुकौ ॥ 23
विचिन्वन्तौ महीं कृत्स्नामस्माभिः सह संगतौ । त्वमेव मार्गमाणौ तौ विचरन्तौ वसुंधराम् ॥ 24
ददर्शतुर्मृगपतिं पूर्वजेनावरोपितम् । ऋष्यमूकस्य मूले तु बहुपादपसंकुले ॥ 25
भ्रातुर्भयार्तमासीनं सुग्रीवं प्रियदर्शनम् । वयं च हरिराजं तं सुग्रीवं सत्यसंगरम् ॥ 26
परिचर्यास्महे राज्यात्पूर्वजेनावरोपितम् । ततस्तौ चीरवसनौ धनुःप्रवरपाणिनौ ॥ 27
ऋश्यमूकस्य शैलस्य रम्यं देशमुपागतौ । स तौ दृष्ट्वा नरव्याघ्रौ धन्विनौ वानरर्षभः ॥ 28
अभिप्लुतो गिरेस्तस्य शिखरं भयमोहितः । ततः स शिखरे तस्मिन्वानरेन्द्रो व्यवस्थितः ॥ 29
तयोः समीपं मामेव प्रेषयामास सत्वरम् । तावहं पुरुषव्याघ्रौ सुग्रीववचनात्प्रभू ॥ 30
रूपलक्षणसंपन्नौ कृताञ्जलिरुपस्थितः । तौ परिज्ञाततत्त्वार्थौ मया प्रीतिसमन्वितौ ॥ 31
पृष्ठमारोप्य तं देशं प्रापितौ पुरुषर्षभौ । निवेदितौ च तत्त्वेन सुग्रीवाय महात्मने ॥ 32
तयोरन्योन्यसंभाषाद्भृशं प्रीतिरजायत । तत्र तौ कीर्तिसंपन्नौ हरीश्वरनरेश्वरौ ॥ 33
परस्परकृताश्वासौ कथया पूर्ववृत्तया । तं ततः सान्त्वयामास सुग्रीवं लक्ष्मणाग्रजः ॥ 34
स्त्रीहेतोर्वालिना भ्रात्रा निरस्तं पुरुतेजसा । ततस्त्वन्नाशजं शोकं रामस्याक्लिष्टकर्मणः ॥ 35
लक्ष्मणो वानरेन्द्राय सुग्रीवाय न्यवेदयत् । स श्रुत्वा वानरेन्द्रस्तु लक्ष्मणेनेरितं वचः ॥ 36
तदासीन्निष्प्रभोऽत्यर्थं ग्रहग्रस्त इवांशुमान् । ततस्त्वद्गात्रशोभीनि रक्षसा ह्रियमाणया ॥ 37
यान्याभरणजालानि पातितानि महीतले । तानि सर्वाणि रामाय आनीय हरियूथपाः ॥ 38
संहृष्टा दर्शयामासुर्गतिं तु न विदुस्तव । तानि रामाय दत्तानि मयैवोपहृतानि च ॥ 39
स्वनवन्त्यवकीर्णानि तस्मिन्विहतचेतसि । तान्यङ्के दर्शनीयानि कृत्वा बहुविधं तदा ॥ 40
तेन देवप्रकाशेन देवेन परिदेवितम् । प्रादीपयद्दाशरथेस्तदा शोकहुताशनम् ॥ 41
शयितं च चिरं तेन दुःखार्तेन महात्मना । मयापि विविधैर्वाक्यैः कृच्छ्रादुत्थापितः पुनः ॥ 42
तानि दृष्ट्वा महार्हाणि दर्शयित्वा मुहुर्मुहुः । राघवः सहसौमित्रिः सुग्रीवे संन्यवेशयत् ॥ 43
स तवादर्शनादार्ये राघवः परितप्यते । महता ज्वलता नित्यमग्निनेवाग्निपर्वतः ॥ 44
त्वत्कृते तमनिद्रा च शोकश्चिन्ता च राघवम् । तापयन्ति महात्मानमग्न्यगारमिवाग्नयः ॥ 45
तवादर्शनशोकेन राघवः परिचाल्यते । महता भूमिकम्पेन महानिव शिलोच्चयः ॥ 46
काननानि सुरम्याणि नदीप्रस्रवणानि च । चरन्न रतिमाप्नोति त्वामपश्यन्नृपात्मजे ॥ 47
स त्वां मनुजशार्दूलः क्षिप्रं प्राप्स्यति राघवः । समित्रबान्धवं हत्वा रावणं जनकात्मजे ॥ 48
सहितौ रामसुग्रीवावुभावकुरुतां तदा । समयं वालिनं हन्तुं तव चान्वेषणं प्रति ॥ 49
ततस्ताभ्यां कुमाराभ्यां वीराभ्यां स हरीश्वरः । किष्किन्धां समुपागम्य वाली युद्धे निपातितः ॥ 50
ततो निहत्य तरसा रामो वालिनमाहवे । सर्वर्क्षहरिसङ्घानां सुग्रीवमकरोत्पतिम् ॥ 51

रामसुग्रीवयो रैक्यं देव्येवं समजायत। हनूमन्तं च मां विद्धि तयोर्दूतमुपागतम्॥ 52
स्वं राज्यं प्राप्य सुग्रीवः स्वानानीय महाकपीन्। त्वदर्थं प्रेषयामास दिशो दश महाबलान्॥ 53
आदिष्टा वानरेन्द्रेण सुग्रीवेण महौजसः। अद्रिराजप्रतीकाशाः सर्वतः प्रस्थिता महीम्॥ 54
ततस्ते मार्गमाणा वै सुग्रीववचनातुराः। चरन्ति वसुधां कृत्स्नां वयमन्ये च वानराः॥ 55
अङ्गदो नाम लक्ष्मीवान्वालिसूनुर्महाबलः। प्रस्थितः कपिशार्दूलस्त्रिभागबलसंवृतः॥ 56
तेषां नो विप्रणष्टानां विन्ध्ये पर्वतसत्तमे। भृशं शोकपरीतानामहोरात्रगणा गताः॥ 57
ते वयं कार्यनैराश्यात्कालस्यातिक्रमेण च। भयाच्च कपिराजस्य प्राणांस्त्यक्तुमुपस्थिताः॥ 58
विचित्य गिरिदुर्गाणि नदीप्रस्रवणानि च। अनासाद्य पदं देव्याः प्राणांस्त्यक्तुं व्यवस्थिताः॥ 59
ततस्तस्य गिरेर्मूर्ध्नि वयं प्रायमुपास्महे। दृष्ट्वा प्रायोपविष्टांश्च सर्वान्वानरपुंगवान्॥ 60
भृशं शोकार्णवे मग्नः पर्यदेवयदङ्गदः। तव नाशं च वैदेहि वालिनश्च तथा वधम्॥ 61
प्रायोपवेशमस्माकं मरणं च जटायुषः। तेषां नः स्वामिसंदेशान्निराशानां मुमूर्षताम्॥ 62
कार्यहेतोरिहायातः शकुनिर्वीर्यवान्महान्। गृध्रराजस्य सोदर्यः संपातिर्नाम गृध्रराट्॥ 63
श्रुत्वा भ्रातृवधं कोपादिदं वचनमब्रवीत्। यवीयान्केन मे भ्राता हतः क्व च निपातितः॥ 64
एतदाख्यातुमिच्छामि भवद्भिर्वानरोत्तमाः। अङ्गदोऽकथयत्तस्य जनस्थाने महद्वधम्॥ 65
रक्षसा भीमरूपेण त्वामुद्दिश्य यथार्थतः। जटायोस्तु वधं श्रुत्वा दुःखितः सोऽरुणात्मजः॥ 66
त्वामाह स वरारोहे वसन्तीं रावणालये। तस्य तद्वचनं श्रुत्वा संपातेः प्रीतिवर्धनम्॥ 67
अङ्गदप्रमुखाः सर्वे ततः संप्रस्थिता वयम्। विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्तमुत्तमम्॥ 68
त्वद्दर्शने कृतोत्साहा हृष्टाः पुष्टाः प्लवंगमाः। अङ्गदप्रमुखाः सर्वे वेलोपान्तमुपागताः॥ 69
चिन्तां जग्मुः पुनर्भीमां त्वद्दर्शनसमुत्सुकाः। अथाहं हरिसैन्यस्य सागरं दृश्य सीदतः॥ 70
व्यवधूय भयं तीव्रं योजनानां शतं प्लुतः। लङ्का चापि मया रात्रौ प्रविष्टा राक्षसाकुला॥ 71
रावणश्च मया दृष्टस्त्वं च शोकनिपीडिता। एतत्ते सर्वमाख्यातं यथावृत्तमनिन्दिते॥ 72
अभिभाषस्व मां देवि दूतो दाशरथेरहम्। तन्मां रामकृतोद्योगं त्वन्निमित्तमिहागतम्॥ 73
सुग्रीवसचिवं देवि बुद्ध्यस्व पवनात्मजम्। कुशली तव काकुत्स्थः सर्वशस्त्रभृतां वरः॥ 74
गुरोराराधने युक्तो लक्ष्मणः शुभलक्षणः। तस्य वीर्यवतो देवि भर्तुस्तव हिते रतः॥ 75
अहमेकस्तु संप्राप्तः सुग्रीववचनादिह। मयेयमसहायेन चरता कामरूपिणा॥ 76
दक्षिणा दिगनुक्रान्ता त्वन्मार्गविचयैषिणा। दिष्ट्याहं हरिसैन्यानां त्वन्नाशमनुशोचताम्॥ 77
अपनेष्यामि संतापं तवाधिगमशंसनात्। दिष्ट्या हि न मम व्यर्थं सागरस्येह लङ्घनम्॥ 78
प्राप्स्याम्यहमिदं देवि त्वद्दर्शनकृतं यशः। राघवश्च महावीर्यः क्षिप्रं त्वामभिपत्स्यते।
समित्रबान्धवं हत्वा रावणं राक्षसाधिपम्॥ 79
माल्यवान्नाम वैदेहि गिरीणामुत्तमो गिरिः। ततो गच्छति गोकर्णं पर्वतं केसरी हरिः॥ 80
स च देवर्षिभिर्दिष्टः पिता मम महाकपिः। तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरन्॥ 81

यस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि । हनूमानिति विख्यातो लोके स्वेनैव कर्मणा ॥ 82
विश्वासार्थं तु वैदेहि भर्तुरुक्ता मया गुणाः । अचिरात्त्वामितो देवि राघवो नयिता ध्रुवम् ॥ 83
एवं विश्वासिता सीता हेतुभिः शोककर्शिता । उपपन्नैरभिज्ञानैर्दूतं तमधिगच्छति ॥ 84
अतुलं च गता हर्षं प्रहर्षेण तु जानकी । नेत्राभ्यां वक्त्रपक्ष्मभ्यां मुमोचानन्दजं जलम् ॥ 85
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् । अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट् ॥ 86
हनूमन्तं कपिं व्यक्तं मन्यते नान्यथेति सा । अथोवाच हनूमांस्तामुत्तरं प्रियदर्शनाम् ॥ 87
एतत्ते सर्वमाख्यातं समाश्वसिहि मैथिलि । किं करोमि कथं वा ते रोचते प्रतियाम्यहम् ॥ 88

हतेऽसुरे संयति शम्बसादने कपिप्रवीरेण महर्षिचोदनात् ।
ततोऽस्मि वायुप्रभवो हि मैथिलि प्रभावतस्तत्प्रतिमश्च वानरः ॥ 89

इति एकत्रिंशः सर्गः ॥

---

## अथ द्वात्रिंशः सर्गः ॥ (प्रा. सं. 36)

अङ्गुलीयकदानं सीताप्रश्नश्च ॥

*கணையாழி அளித்தல் - ஸீதையின் கேள்விகள் - ஹனுமானின் பதில்கள்.*

भूय एव महातेजा हनूमान्पवनात्मजः । अब्रवीत्प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥ 1
वानरोऽहं महाभागे दूतो रामस्य धीमतः । रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ 2
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना । समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥ 3
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषितम् । भर्तारमिव संप्राप्तं जानकी मुदिताभवत् ॥ 4
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् । बभूव हर्षोदग्रं च राहुमुक्त इवोडुराट् ॥ 5
ततः सा ह्रीमती बाला भर्तुः संदेशहर्षिता । परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥ 6
विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम । येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ 7
शतयोजनविस्तीर्णः सागरो मकरालयः । विक्रमश्लाघनीयेन क्रमता गोष्पदीकृतः ॥ 8
नहि त्वां प्राकृतं मन्ये वानरं वानरर्षभ । यस्य ते नास्ति संत्रासो रावणादपि संभ्रमः ॥ 9
अर्हसे च कपिश्रेष्ठ मया समभिभाषितुम् । यद्यसि प्रेषितस्तेन रामेण विदितात्मना ॥ 10
प्रेषयिष्यति दुर्धर्षो रामो नह्यपरीक्षितम् । पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥ 11
दिष्ट्या च कुशली रामो धर्मात्मा सत्यसंगरः । लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥ 12
कुशली यदि काकुत्स्थः किं न सागरमेखलाम् । महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥ 13
अथवा शक्तिमन्तौ तौ सुराणामपि निग्रहे । ममैव तु न दुःखानामस्ति मन्ये विपर्ययः ॥ 14
कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते । उत्तराणि च कार्याणि कुरुते पुरुषोत्तमः ॥ 15
कच्चिन्न दीनः संभ्रान्तः कार्येषु च न मुह्यति । कच्चित्पुरुषकार्याणि कुरुते नृपतेः सुतः ॥ 16

तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्तत । उत्तरं च मया दृष्टं कार्यशेषमनन्तरम् ॥ 108
ततोऽवर्धत मे कायस्तदा पर्वतसंनिभः । युद्धकाङ्क्षी वनं तस्य विनाशयितुमारभे ॥ 109
तद्भग्नं वनखण्डं तु भ्रान्तत्रस्तमृगद्विजम् । प्रतिबुद्ध्य निरीक्षन्ते राक्षस्यो विकृताननाः ॥ 110
मां च दृष्ट्वा वने तस्मिन्समागम्य ततस्ततः । ताः समभ्यागताः क्षिप्रं रावणायाचचक्षिरे ॥ 111
राजन्वनमिदं दुर्गं तव भग्नं दुरात्मना । वानरेण ह्यविज्ञाय तव वीर्यं महाबल ॥ 112
दुर्बुद्धेस्तस्य राजेन्द्र तव विप्रियकारिणः । वधमाज्ञापय क्षिप्रं यथासौ विलयं व्रजेत् ॥ 113
तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा बहुदुर्जयाः । राक्षसाः किंकरा नाम रावणस्य मनोनुगाः ॥ 114
तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् । मया तस्मिन्वनोद्देशे परिघेण निषूदितम् ॥ 115
तेषां तु हतशिष्टा ये ते गता लघुविक्रमाः । निहतं च मया सैन्यं रावणायाचचक्षिरे ॥ 116
ततो मे बुद्धिरुत्पन्ना चैत्यप्रासादमाक्रमम् । तत्रस्थान्राक्षसान्हत्वा शतं स्तम्भेन वै पुनः ॥ 117
ललामभूतो लङ्काया मया विध्वंसितो रुषा । ततः प्रहस्तस्य सुतं जम्बुमालिनमादिशत् ॥ 118
राक्षसैर्बहुभिः सार्धं घोररूपैर्भयानकैः । तमहं बलसंपन्नं राक्षसं रणकोविदम् ॥ 119
परिघेणातिघोरेण सूदयामि सहानुगम् । तच्छ्रुत्वा राक्षसेन्द्रस्तु मन्त्रिपुत्रान्महाबलान् ॥ 120
पदातिबलसंपन्नान्प्रेषयामास रावणः । परिघेणैव तान्सर्वान्नयामि यमसादनम् ॥ 121
मन्त्रिपुत्रान्हताञ्श्रुत्वा समरे लघुविक्रमान् । पञ्च सेनाग्रगाञ्छूरान्प्रेषयामास रावणः ॥ 122
तानहं सहसैन्यान्वै सर्वानेवाभ्यसूदयम् । ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ॥ 123
बहुभी राक्षसैः सार्धं प्रेषयामास संयुगे । तं तु मन्दोदरीपुत्रं कुमारं रणपण्डितम् ॥ 124
सहसा खं समुद्यन्तं पादयोश्च गृहीतवान् । तमासीनं शतगुणं भ्रामयित्वा व्यपेषयम् ॥ 125
तमक्षमागतं भग्नं निशम्य स दशाननः । ततश्चेन्द्रजितं नाम द्वितीयं रावणः सुतम् ॥ 126
व्यादिदेश सुसंक्रुद्धो बलिनं युद्धदुर्मदम् । तच्चाप्यहं बलं सर्वं तं च राक्षसपुंगवम् ॥ 127
नष्टौजसं रणे कृत्वा परं हर्षमुपागतः । महतापि महाबाहुः प्रत्ययेन महाबलः ॥ 128
प्रहितो रावणेनैष सह वीरैर्मदोद्धतैः । सोऽविषह्यं हि मां बुद्ध्वा स्वसैन्यं चावमर्दितम् ॥ 129
ब्रह्मणोऽस्त्रेण स तु मां प्रबद्ध्वा चातिवेगितः । रज्जुभिश्चापि बध्नन्ति ततो मां तत्र राक्षसाः ॥ 130
रावणस्य समीपं च गृहीत्वा मामुपानयन् । दृष्ट्वा संभाषितश्चाहं रावणेन दुरात्मना ॥ 131
पृष्टश्च लङ्कागमनं राक्षसानां च तं वधम् । तत्सर्वं च मया तत्र सीतार्थमिति जल्पितम् ॥ 132
तस्यास्तु दर्शनाकाङ्क्षी प्राप्तस्त्वद्भवनं विभो । मारुतस्यौरसः पुत्रो वानरो हनुमानहम् ॥ 133
रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् । सोऽहं दौत्येन रामस्य त्वत्सकाशमिहागतः ॥ 134
सुग्रीवश्च महाभाग स त्वां कौशलमब्रवीत् । धर्मार्थकामसहितं हितं पथ्यमुवाच ह ॥ 135
वसतो ऋष्यमूके मे पर्वते विपुलद्रुमे । राघवो रणविक्रान्तो मित्रत्वं समुपागतः ॥ 136
तेन मे कथितं राजन्भार्या मे रक्षसा हृता । तत्र साहाय्यहेतोर्मे समयं कर्तुमर्हसि ॥ 137
वालिना हृतराज्येन सुग्रीवेण सह प्रभुः । चक्रेऽग्निसाक्षिकं सख्यं राघवः सहलक्ष्मणः ॥ 138

तेन वालिनमाहत्य शरेणैकेन संयुगे। वानराणां महाराजः कृतः संप्लवतां प्रभुः॥ 139
तस्य साहाय्यमस्माभिः कार्यं सर्वात्मना त्विह। तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः॥ 140
क्षिप्रमानीयतां सीता दीयतां राघवाय च। यावन्न हरयो वीरा विधमन्ति बलं तव॥ 141
वानराणां प्रभावोऽयं न केन विदितः पुरा। देवतानां सकाशं च ये गच्छन्ति निमन्त्रिताः॥ 142
इति वानरराजस्त्वामाहेत्यभिहितो मया। मामैक्षत ततो रुष्टश्चक्षुषा प्रदहन्निव॥ 143
तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा। मत्प्रभावमविज्ञाय रावणेन दुरात्मना॥ 144
ततो विभीषणो नाम तस्य भ्राता महामतिः। तेन राक्षसराजश्च याचितो मम कारणात्॥ 145
नैवं राक्षसशार्दूल त्यज्यतामेष निश्चयः। राजशास्त्रव्यपेतो हि मार्गः संलक्ष्यते त्वया॥ 146
दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस। दूतेन वेदितव्यं च यथार्थं हितवादिना॥ 147
सुमहत्यपराधेऽपि दूतस्यातुलविक्रम। विरूपकरणं दृष्टं न वधोऽस्ति हि शास्त्रतः॥ 148
विभीषणेनैवमुक्तो रावणः संदिदेश तान्। राक्षसानेतदेवास्य लाङ्गूलं दह्यतामिति॥ 149
ततस्तस्य वचः श्रुत्वा मम पुच्छं समन्ततः। वेष्टितं शणवल्कैश्च पट्टैः कार्पासकैस्तथा॥ 150
राक्षसाः सिद्धसंनाहास्ततस्ते चण्डविक्रमाः। तदा दीप्यन्त मे पुच्छं निघ्नन्तः काष्ठमुष्टिभिः॥ 151
बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः। न मे पीडा भवेत्काचिद्दिदृक्षोर्नगरीं दिवा॥ 152
ततस्ते राक्षसाः शूरा बद्धं मामग्निसंवृतम्। अघोषयन्राजमार्गे नगरद्वारमागताः॥ 153
ततोऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः। विमोचयित्वा तं बन्धं प्रकृतिस्थः स्थितः पुनः॥ 154
आयसं परिघं गृह्य तानि रक्षांस्यसूदयम्। ततस्तन्नगरद्वारं वेगेन प्लुतवानहम्॥ 155
पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम्। दहाम्यहमसंभ्रान्तो युगान्ताग्निरिव प्रजाः॥ 156
ततो मे ह्यभवत्त्रासो लङ्कां दग्धां समीक्ष्य तु। विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते॥ 157
लङ्कायाः कश्चिदुद्देशः सर्वा भस्मीकृता पुरी। दहता च मया लङ्कां दग्धा सीता न संशयः॥ 158
रामस्य च महत्कार्यं मयेदं विफलीकृतम्। इति शोकसमाविष्टश्चिन्तामहमुपागतः॥ 159
ततोऽहं वाचमश्रौषं चारणानां शुभाक्षराम्। जानकी न च दग्धेति विस्मयोदन्तभाषिणाम्॥ 160
ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम्। अदग्धा जानकीत्येव निमित्तैश्चोपलक्षितम्॥ 161
दीप्यमाने तु लाङ्गूले न मां दहति पावकः। हृदयं च प्रहृष्टं मे वाताः सुरभिगन्धिनः॥ 162
तैर्निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः। ऋषिवाक्यैश्च सिद्धार्थैरभवं हृष्टमानसः॥ 163
पुनर्दृष्ट्वा च वैदेहीं विसृष्टश्च तया पुनः। ततः पर्वतमासाद्य तत्रारिष्टमहं पुनः॥ 164
प्रतिप्लवनमारेभे युष्मद्दर्शनकाङ्क्षया। ततः श्वसनचन्द्रार्कसिद्धगन्धर्वसेवितम्॥ 165
पन्थानमहमाक्रम्य भवतो दृष्टवानिह। राघवस्य प्रभावेन भवतां चैव तेजसा॥ 166
सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम्। एतत्सर्वं मया तत्र यथावदुपपादितम्।
अत्र यन्न कृतं शेषं तत्सर्वं क्रियतामिति॥ 167

इति चतुःपञ्चाशः सर्गः॥

# प्रा. सं. 59, 60 तमौ सर्गौ ॥

लङ्कां दृष्ट्वा प्रत्यागतो हनुमान् 58 तमे सर्गे वयस्येभ्यो लङ्कावृत्तान्तं विस्तरेण कथयित्वा "कृतं सर्वमावेदितम् अत्र यन्न कृतं शेषं तत्सर्वं क्रियतां" इत्युक्त्वोपरराम । 59 तमे सर्गे हनुमतैव "सीतया सहैव रामस्य दर्शनं युक्तं" इत्युपक्रम्य तदुपायतया रावणवधादिकं कर्तव्यमुपन्यस्तमित्युक्त्वा 58 सर्गवदेव उपसंहारः कृत इति दृश्यते ॥

अर्थोऽयं प्रा. सं. 37 सर्गे सीतायै हनुमता निवेदितः । तयापि "यदि रामो दशग्रीवमिह हत्वा सबान्धवम् । मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत्" (श्लो. 64) इति प्रत्याख्यातः । हनुमांश्च देव्याः युक्तरूपं तद्वचनं साधुमेने ॥

लङ्कादाहात्परं 56 सर्गे सीतामाप्रष्टुमागतो हनुमान् । देवी तत्राप्यमुमेवार्थमाम्रेडयामास । तत्रापि हनुमान् "नचिराद्राघवो देवि त्वामितो नयिताऽनघे" इत्यादि प्रत्यवोचत् सीताया आशयमूरीकुर्वन् । तमेवचार्थमन्ववोचत् सुहृद्भ्योपि (सर्गः 58 श्लोकाः 99, 100, 106, 107) ॥

सत्येवं 59 तमे सर्गे "न्याय्यं स्म सह वैदेह्या द्रष्टुं तौ पार्थिवात्मजौ" इति हनुमता कथितं इति पाठो न केवलं न समञ्जसः, किन्तु पूर्वापरविरुद्धोभवन् अनृजुभाषित्वं हनुमत्यारोपयतीव । तत् सर्वथा न युक्तम् । 59, 60 सर्गयोः बहवः श्लोका पौनरुक्ता असङ्गता आनुपूर्वीरहिताश्च दृश्यन्ते ॥

अत्र सन्दिहानेन मया बहुष्वादर्शेषु गवेषणा कृता । प्राचीनकतकव्याख्याने समञ्जसः पाठो दृष्टः । तदनुरोधेन "सीतया सहैव रामसमीपं गन्तुं युक्तं" इत्याशयोऽङ्गदस्यैवेति दृश्यते ॥

अत एव 59-60 सर्गावेकसर्गतया युज्येते इति तथैवात्र प्रकाशनं क्रियते । प्राचीनसंस्करणरीत्या सर्गविभागमावश्यकं ये मन्यन्ते ते कामं "एवमास्ते— उपकल्प्यताम्" (श्लो. 17) इत्यन्तमेकं सर्गमवशिष्टमन्यं च सर्गं मानयन्तु ॥

---

## ப்ராசீன ஸம்ஸ்கரணரீத்யா 59, 60 ஸர்க்கங்கள்.

ஆஞ்சநேயர் லங்கையிலிருந்து திரும்பிவந்ததும், அங்கு நடந்தவைகளையெல்லாம் தன் நண்பர்களிடம் 58-வது ஸர்க்கத்தில் சொல்லி, கடைசியில் "எல்லாவற்றையும் தெரிவித்து விட்டேன். செய்யப்படாமலிருப்பவை (உங்களால்) செய்யப்படட்டும்" என்று முடித்து விட்டார். 59-வது ஸர்க்கத்தில் அவரே தொடர்ந்து "ஸீதையோடு கூடவே போய் ராமனைப் பார்ப்பதுதான் ந்யாயம்" என்று யோஜனை கூறியதாக ஆரம்பித்து 58-வது ஸர்க்கத்தின் முடிவே மறுபடியும் காணப்படுகிறது. இது ஸரியல்ல.

இதே யோஜனையை प्रा. सं. 37-வது ஸர்க்கத்தில் ஹனுமான் ஸீதையிடம் கூற, ஸீதை அதை ஆக்ஷேபித்து "ராமன் இங்கு வந்து ராவணனைக் கொன்று அவரே என்னை அழைத்துப்போவதுதான் உசிதம்" என பதிலளித்தாள். ஹனுமானும் அதை த்ருப்தியுடன் ஏற்றுக்கொண்டார். லங்காதஹனத்திற்குப் பிறகு (56-வது ஸர்க்கம்) கடைசியாய் ஸீதையிடம்

வந்து உத்திரவு பெற்றுக்கொள்ளும்போதும், ஸீதை இதையே மறுபடி வர்ப்புறுத்த, ஆஞ்சநேயரும் "சீக்கிரமே ராமன் ஸைந்யங்களுடன் வந்து யுத்தத்தில் வென்று, தங்கள் சோகத்தை நீக்கப் போகிறார்" என்று கூறி திரும்பிவிட்டார். இவ்விபரங்களை 58-வது ஸர்க்கத்தில் தன் நண்பர்களிடம் தெரிவித்துமிருக்கிறார். (ச்லோகம் 99, 100, 106, 107.)

எனவே, ஹனுமானே மறுபடி 59-வது ஸர்க்கத்தில் "ஸீதையோடு ராமனைப் பார்ப்பதுதான் ந்யாயம்" என்று கூறியதாயிருப்பது பொருத்தமில்லாததோடு அவருக்குரிய உண்மை நிலைக்குக் குறைவு விளைவிப்பதாயுமிருக்கிறது. மேலும் 60-வது ஸர்க்கத்தில் அங்கதன் இந்த யோஜனையைக் கூறியதாக துடங்கப்படுகிறது. இதில் கோவிந்தராஜர் பாட ரீதியாய் 6½ ச்லோகங்களும், M. L. J. பதிப்பில் 14 ச்லோகங்களும், புனா பதிப்பில் 20 ச்லோகங்களுமிருக்கின்றன. 59, 60 ஸர்க்கங்களில் பல ச்லோகங்கள் திரும்பத்திரும்பச் சொல்லப்பட்டவைகளாகவும், பொருத்தமற்றவைகளாகவும், மாறுபட்டும் காணப்படுகின்றன.

இதை யுணர்ந்து பலவிடங்களில் ஆராய்ந்ததில், தஞ்சை ஸரஸ்வதி மஹாலில் கிடைத்த புராதனமான அமிர்த கதக வ்யாக்யானத்தில் பொருத்தமான பாடம் காணப்பட்டது. அதன்படி "ஸீதையோடு ராமனை யணுகவேண்டும்" என்ற யோஜனை முதலிலேயே அங்கதனால் தான் சொல்லப்பட்டிருக்கிறது. ஆஞ்சனேயர் இப்படிச் சொல்லவேயில்லை. [Lahore D. A. V. College பதிப்பும், Italian பதிப்பும் இதை உறுதிப்படுத்துகின்றன.] ஆகவே இரு ஸர்க்கங்களையும் ஒன்றாக்கி 'கதக' வ்யாக்யான ரீதியாய் மூலம் கீழே அச்சிடப்பட்டிருக்கிறது.

2 ஸர்க்கங்களாகவே இருக்கவேண்டுமென்று நம்புபவர்கள், முதல் 17 ச்லோகங்களை ஒரு ஸர்க்கமாகவும், பின் 20 ச்லோகங்களை அடுத்த ஸர்க்கமாகவும் கொள்ளலாம்.

---

## अथ पञ्चपञ्चाशः सर्गः ॥ (प्रा. सं. 59, 60)

### अनन्तरकर्तव्येऽङ्गदस्य मन्त्रः, जांबवतो निर्णयश्च ॥

மேல்செய்யவேண்டியதைப்பற்றி அங்கதனுடைய யோஜனை. ஜாம்பவானின் முடிவு.

एतदाख्याय तत्सर्वं हनुमान्मारुतात्मजः । भूयः समुपचक्राम वचनं वक्तुमुत्तरम् ॥ 1
सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः । शीलमासाद्य सीताया मम च प्रवणं मनः ॥ 2
आर्यायाः सदृशं शीलं सीतायाः प्लवगर्षभाः । तपसा धारयेल्लोकान् क्रुद्धा वा निर्दहेदपि ॥ 3
सर्वथातिप्रकृष्टोऽसौ रावणो राक्षसेश्वरः । यस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ॥ 4
न तदग्निशिखा कुर्यात् संस्पृष्टा पाणिना सती । जनकस्यात्मजा कुर्यात् यत्क्रोधकलुषीकृता ॥ 5
अशोकवनिकामध्ये रावणस्य दुरात्मनः । अधस्तात् शिंशपामूले साध्वी करुणमास्थिता ॥ 6
राक्षसीभिः परिवृता शोकसन्तापकर्शिता । मेघरेखापरिवृता चन्द्ररेखेव निष्प्रभा ॥ 7

---

प्राचीनसंस्करणासामञ्जस्यप्रमापकानि कतकव्याख्यावाक्यानि :—

श्लो. 1. उत्तरवचनमिति जाम्बवत्पृष्टोत्तरवचनमित्यर्थः ॥

अचिन्तयन्ती वैदेही रावणं बलदर्पितम् । पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी ॥ 8
अनुरक्ता च वैदेही रामे सर्वात्मना शुभा । अनन्यचित्ता रामे च पौलोमीव पुरन्दरे ॥ 9
तदेकवासःसंवीता रजोध्वस्ता तथैव च । सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ 10
राक्षसीभिर्विरूपाभिर्दृष्टा हि प्रमदावने । एकवेणीधरा दीना भर्तृचिन्तापरायणा ॥ 11
अधःशय्या विवर्णाङ्गी पद्मिनीव हिमोदये । रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ 12
कथञ्चिन्मृगशावाक्षी विश्वासमुपपादिता । ततः संभाषिता चैव सर्वमर्थं प्रकाशिता ॥ 13
रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता । नियतः समुदाचारो भक्तिर्भर्तरि चोत्तमा ॥ 14
यन्न हन्ति दशग्रीवं स महात्मा दशाननः । निमित्तमात्रं रामस्तु वधे तस्य भविष्यति ॥ 15
सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता । प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥ * 16
एवमास्ते महाभागा सीता शोकपरायणा । अत्र यन्न कृतं शेषं तत्सर्वमुपकल्प्यताम् ॥ 17
तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत । जांबवत्प्रमुखान् सर्वाननुज्ञाप्य महाकपीन् ॥ 18
अस्मिन्नेवंगते कार्ये भवतां च निवेदिते । न्याय्यं स्म सह वैदेह्या द्रष्टुं तौ पार्थिवात्मजौ ॥ 19
अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीम् । तां लङ्कां तरसा हन्तुं रावणं च महाबलम् ॥ 20
किं पुनः सहितो वीरैः बलवद्भिः कृतात्मभिः । कृतास्त्रैः प्लवगैः शक्तैर्भवद्भिर्विजयैषिभिः ॥ 21
अहं तु रावणं संख्ये ससैन्यं सपुरस्सरम् । सहपुत्रं वधिष्यामि सहोदरयुतं युधि ॥ 22
ब्राह्ममस्त्रं च रौद्रं च वायव्यं वारुणं तथा । यदि शक्रजितोऽस्त्राणि दुर्निरीक्ष्याणि संयुगे ॥ 23
तान्यहं विधमिष्यामि निहनिष्यामि राक्षसान् । भवतामननुज्ञातो विक्रमो मे रुणद्धि माम् ॥ 24
सागरोप्यतियाद्वेलां मन्दरः प्रचलेदपि । न जांबवन्तं समरे कंपयेदरिवाहिनी ॥ 25
सर्वराक्षससंघानां राक्षसा ये च पूर्वजाः । अलमेकोऽपि नाशाय वीरो वायुसुतः कपिः ॥ 26
पनसस्योरुवेगेन नीलस्य च महात्मनः । मन्दरोऽप्यवशीर्येत किं पुनर्युधि राक्षसाः ॥ 27
अश्विपुत्रौ महाभागावेतौ प्लवगसत्तमौ । एतयोः प्रतियोद्धारं न पश्यामि रणाजिरे ॥ 28
पितामहवरोत्सेकात्परमं दर्पमास्थितौ । सर्वापध्यत्वमतुलमनयोर्दत्तवान्पुरा ॥ 29
दृष्टा देवी न चानीता इति तत्र निवेदितुम् । न युक्तमिव पश्यामि भवद्भिः ख्यातविक्रमैः ॥ 30
तेष्वेवं हतशेषेषु राक्षसेषु हनूमता । किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् ॥ 31
तमेवं कृतसंकल्पं जाम्बवान् हरिसत्तमः । उवाच परमप्रीतो वाक्यमर्थवदर्थवित् ॥ 32
विचेतुं वयमाज्ञप्ता दक्षिणां दिशमुत्तमाम् । नानेतुं कपिराजेन नैव रामेण धीमता ॥ 33

---

16. *ப்ரதமையில் படிப்பவனின் கல்விபோல் ஸீதை மிகவும் மெலிந்திருந்தாள்.*

प्राचीनसंस्करणासामञ्जस्यप्रमापकानि कतकव्याख्यावाक्यानि :—

श्लो. 17. एवमास्त इति परं पातिव्रत्यमहिम्ना जीवन्त्यास्त इत्यर्थः । एतेन तस्याः प्रत्यानयने अवश्यं सुग्रीवसहितं रामेण प्रयतितव्यता तु हनुमता दर्शिता ॥

श्लो. 19. निवेदित इति हनुमतेति शेषः ॥

श्लो. 24. मांरुणद्धि मदुद्योगं निवारयति । यद्यनुमतिर्भवतां तदा मत्पराक्रमो मां बलादेव प्रवर्तयेदित्यर्थः ॥

कथंचिन्निर्जितां सीतामस्माभिर्नाभिरोचयेत् । राघवो नृपशार्दूलः कुलं व्यपदिशन् स्वकम् ॥ 34
विफलं कर्म च कृतं भवेत्तुष्टिर्न तस्य च । वृथा च दर्शितं वीर्यं भवेद्वानरपुङ्गवाः ॥ 35
तस्माद्गच्छाम वै सर्वे यत्र रामः सलक्ष्मणः । सुग्रीवश्च महातेजाः कार्यस्यास्य निवेदने ॥ 36
न तावदेषा मतिरक्षमा नो यथा भवान् पश्यति राजपुत्र ।
यथा तु रामस्य मतिर्निविष्टा तथा भवान् पश्यतु कार्यसिद्धिम् ॥ 37

इति पञ्चपञ्चाशः सर्गः ॥

## अथ षट्पञ्चाशः सर्गः ॥ (प्रा. सं. 61)

मधुवनप्रवेशकोलाहलः ॥

*மதுவனத்தில் நுழைவதில் குரங்குகளின் கொண்டாட்டம்.*

ततो जाम्बवतो वाक्यमगृह्णन्त वनौकसः । अङ्गदप्रमुखा वीरा हनूमांश्च महाकपिः ॥ 1
प्रीतिमन्तस्ततः सर्वे वायुपुत्रपुरःसराः । महेन्द्राग्रात्समुत्पत्य पुप्लुवुः प्लवगर्षभाः ॥ 2
मेरुमन्दरसंकाशा मत्ता इव महागजाः । छादयन्त इवाकाशं महाकाया महाबलाः ॥ 3
सभाज्यमानं भूतैस्तमात्मवन्तं महाबलम् । हनूमन्तं महावेगं वहन्त इव दृष्टिभिः ॥ * 4
राघवे चार्थनिर्वृत्तिं कर्तुं च परमं यशः । समाधाय समृद्धार्थाः कर्मसिद्धिभिरुन्नताः ॥ 5
प्रियाख्यानोन्मुखाः सर्वे सर्वे युद्धाभिनन्दिनः । सर्वे रामप्रतीकारे निश्चितार्था मनस्विनः ॥ 6
प्लवमानाः खमाप्लुत्य ततस्ते काननौकसः । नन्दनोपममासेदुर्वनं द्रुमशतायुतम् ॥ 7
यत्तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम् । अधृष्यं सर्वभूतानां सर्वभूतमनोहरम् ॥ 8
यद्रक्षति महावीरः सदा दधिमुखः कपिः । मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ॥ 9
ते तद्वनमुपागम्य बभूवुः परमोत्कटाः । वानरा वानरेन्द्रस्य मनःकान्ततमं महत् ॥ 10
ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् । कुमारमभ्ययाचन्त मधूनि मधुपिङ्गलाः ॥ 11
ततः कुमारस्तान्वृद्धाञ्जाम्बवत्प्रमुखान्कपीन् । अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥ 12
ततश्चानुमताः सर्वे सुसंहृष्टा वनौकसः । मुदिताः प्रेरिताश्चापि प्रनृत्यन्ति ततस्ततः ॥ 13
गायन्ति केचित्प्रहसन्ति केचिन्नृत्यन्ति केचित्प्रणमन्ति केचित् ।
पठन्ति केचित्प्रचरन्ति केचित्प्लुपन्ति केचित्प्रलपन्ति केचित् ॥ 14

4. *ஹநுமானை முன்னிட்டு, அவரையே பார்த்தவண்ணம் வெற்றியில் பெருமைகொண்ட எல்லோரும் கிஷ்கிந்தையை நோக்கிப் பறந்தார்கள். அப்பார்வையைக் கவி "மஹா வேகசாலியான ஹநுமானை தங்கள் கண்பார்வைகளாலேயே தாங்குபவர்கள்போல்" என்று உத்ப்ரேக்ஷிக்கிறார்.*

परस्परं केचिदुपाश्रयन्ति परस्परं केचिदतिब्रुवन्ति ।
द्रुमाद्रुमं केचिदभिद्रवन्ति क्षितौ नगाग्रान्निपतन्ति केचित् ॥ 15
महीतलात्केचिदुदीर्णवेगा महाद्रुमाग्राण्यभिसंपतन्ति ।
गायन्तमन्यः प्रहसन्नुपैति हसन्तमन्यः प्ररुदन्नुपैति ॥ 16
रुदन्तमन्यः प्रणदन्नुपैति नुदन्तमन्यः प्रणुदन्नुपैति ।
न चात्र कश्चिन्न बभूव मत्तो न चात्र कश्चिन्न बभूव दृप्तः ॥ 17
ततो वनं तत्परिभक्ष्यमाणं द्रुमांश्च विध्वंसितपत्रपुष्पान् ।
समीक्ष्य कोपाद्दधिवक्त्रनामा निवारयामास कपिः कपींस्तान् ॥ 18
स तैः प्रवृद्धैः परिभर्त्स्यमानो वनस्य गोप्ता हरिवृद्धवीरः ।
चकार भूयो मतिमुग्रतेजा वनस्य रक्षां प्रति वानरेभ्यः ॥ 19
उवाच कांश्चित्परुषाण्यभीतमसक्तमन्यांश्च तलैर्जघान ।
समेत्य कैश्चित्कलहं चकार तथैव साम्नोपजगाम कांश्चित् ॥ 20
स तैर्मदादप्रतिवार्यवेगैर्बलाच्च तेन प्रतिवार्यमाणैः ।
प्रधर्षणे त्यक्तभयैः समेत्य प्रकृष्यते चाप्यनवेक्ष्य दोषम् ॥ 21
नखैस्तुदन्तो दशनैर्दशन्तस्तलैश्च पादैश्च समापयन्तः ।
मदात्कपिं ते कपयः समन्तान्महावनं निर्विषयं च चक्रुः ॥ 22

इति षट्पञ्चाशः सर्गः ॥

## अथ सप्तपञ्चाशः सर्गः ॥ (प्रा. सं. 62)

### मधुपानं दधिमुखखिलीकारश्च ॥

*மதுவருந்துதலும், ததிமுகனை அவமதித்தலும்.*

तानुवाच हरिश्रेष्ठो हनूमान्वानरर्षभः । अव्यग्रमनसो यूयं मधु सेवत वानराः ॥ 1
अहमावारयिष्यामि युष्माकं परिपन्थिनः । श्रुत्वा हनूमतो वाक्यं हरीणां प्रवरोऽङ्गदः ॥ 2
प्रत्युवाच प्रसन्नात्मा पिबन्तु हरयो मधु । अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया ॥ 3
अकार्यमपि कर्तव्यं किमङ्ग पुनरीदृशम् । अङ्गदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः ॥ 4
साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् । पूजयित्वाङ्गदं सर्वे वानरा वानरर्षभम् ॥ 5
जग्मुर्मधुवनं यत्र नदीवेग इव द्रुतम् । ते प्रविष्टा मधुवनं पालानाक्रम्य शक्तितः ॥ 6
अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् । पपुः सर्वे मधु तदा रसवत्फलमाददुः ॥ 7
उत्पत्य च ततः सर्वे वनपालान्समागतान् । ताडयन्ति स्म शतशः सक्तान् मधुवने तदा ॥ 8

मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते । पिबन्ति कपयः केचित्सङ्घशस्तत्र हृष्टवत् ॥ 9
पिबन्ति सहिताः सर्वे निघ्नन्तिस्म तथापरे । केचित्पीत्वापविध्यन्ति मधूनि मधुपिङ्गलाः ॥ 10
मधूच्छिष्टेन केचिच्च जघ्नुरन्योन्यमुत्कटाः । अपरे वृक्षमूलेषु शाखा गृह्य व्यवस्थिताः ॥ 11
अत्यर्थं च मदग्लानाः पर्णान्यास्तीर्य शेरते । उन्मत्तवेगाः प्लवगा मधुमत्ताश्च हृष्टवत् ॥ 12
क्षिपन्त्यपि तथान्योन्यं स्खलन्ति च तथापरे । केचित्क्ष्वेडान्प्रकुर्वन्ति केचित्कूजन्ति हृष्टवत् ॥ 13
हरयो मधुना मत्ताः केचित्सुप्ता महीतले । धृष्टाः केचिद्धसन्त्यन्ये केचित्कुर्वन्ति चेतरत् ॥ 14
कृत्वा केचिद्वदन्त्यन्ये केचिद्बुध्यन्ति चेतरत् । येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु ॥ 15
तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः । जानुभिश्च प्रघृष्टाश्च देवमार्गं च दर्शिताः ॥ 16
अब्रुवन्परमोद्विग्ना गत्वा दधिमुखं वचः । हनूमता दत्तवरैर्हतं मधुवनं बलात् ।
वयं च जानुभिर्घृष्टा देवमार्गं च दर्शिताः ॥ 17
तदा दधिमुखः क्रुद्धो वनपस्तत्र वानरः । हतं मधुवनं श्रुत्वा सान्त्वयामास तान्हरीन् ॥ 18
एतागच्छत गच्छामो वानरानतिदर्पितान् । बलेनावारयिष्यामि प्रभुञ्जानान्मधूत्तमम् ॥ 19
श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः । पुनर्वीरा मधुवनं तेनैव सहिता ययुः ॥ 20
मध्ये चैषां दधिमुखः सुप्रगृह्य महातरुम् । समभ्यधावन्वेगेन सर्वे ते च प्लवंगमाः ॥ 21
ते शिलाः पादपांश्चैव पाषाणानपि वानराः । गृहीत्वाभ्यागमन्क्रुद्धा यत्र ते कपिकुञ्जराः ॥ 22
अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुंगवाः । अभ्यधावन्त वेगेन हनुमत्प्रमुखास्तदा ॥ 23
सवृक्षं तं महाबाहुमापतन्तं महाबलम् । वेगवन्तं विजग्राह बाहुभ्यां कुपितोऽङ्गदः ॥ 24
मदान्धो न कृपां चक्रे आर्यकोऽयं ममेति सः । अथैनं निष्पिपेषाशु वेगेन वसुधातले ॥ 25
स भग्नबाहूरुमुखो विह्वलः शोणितोक्षितः । प्रमुमोह महावीरो मुहूर्तं कपिकुञ्जरः ॥ 26
स कथंचिद्विमुक्तस्तैर्वानरैर्वानरर्षभः । उवाचैकान्तमागत्य स्वान्भृत्यान्समुपागतान् ॥ 27
एते तिष्ठन्तु गच्छामो भर्ता नो यत्र वानरः । सुग्रीवो विपुलग्रीवः सह रामेण तिष्ठति ॥ 28
सर्वं चैवाङ्गदे दोषं श्रावयिष्याम पार्थिवे । अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् ॥ 29
इष्टं मधुवनं ह्येतत्सुग्रीवस्य महात्मनः । पितृपैतामहं दिव्यं देवैरपि दुरासदम् ॥ 30
स वानरानिमान्सर्वान्मधुलुब्धान्गतायुषः । घातयिष्यति दण्डेन सुग्रीवः ससुहृज्जनान् ॥ 31
वध्या ह्येते दुरात्मानो नृपाज्ञापरिपन्थिनः । अमर्षप्रभवो रोषः सफलो नो भविष्यति ॥ 32
एवमुक्त्वा दधिमुखो वनपालान्महाबलः । जगाम सहसोत्पत्य वनपालैः समन्वितः ॥ 33
निमेषान्तरमात्रेण स हि प्राप्तो वनालयः । सहस्रांशुसुतो धीमान्सुग्रीवो यत्र वानरः ॥ 34
रामं च लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च । समप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ 35
स निपत्य महावीरः सर्वैस्तैः परिवारितः । हरिर्दधिमुखः पालैः पालानां परमेश्वरः ॥ 36
स दीनवदनो भूत्वा कृत्वा शिरसि चाञ्जलिम् । सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥ 37

इति सप्तपञ्चाशः सर्गः ॥

## अथ अष्टपञ्चाशः सर्गः ॥ (प्रा. सं. 63)

दधिमुखात् मधुवनभङ्गं श्रुत्वा सुग्रीवेण लक्ष्मणाय सीतादर्शनाभ्यूहादेदनम् ॥

ததிமுகனிடமிருந்து மதுவன மழிந்ததைக்கேட்டு ஸுக்ரீவன், ஸீதை காணப்பட்டாள் என்று ஊஹமாய் லக்ஷ்மணனிடம் தெரிவித்தல்.

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः । दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह ॥ 1
उत्तिष्ठोत्तिष्ठ कस्मात्त्वं पादयोः पतितो मम । अभयं ते प्रदास्यामि सत्यमेवाभिधीयताम् ॥ 2
स समाश्वासितस्तेन सुग्रीवेण महात्मना । उत्थाय स महाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥ 3
नैवर्क्षरजसा राजन्न त्वया न च वालिना । वनं निसृष्टपूर्वं ते नाशितं तत्तु वानरैः ॥ 4
न्यवारयमहं सर्वान्सहैभिर्वनचारिभिः । अचिन्तयित्वा मां हृष्टा भक्षयन्ति पिबन्ति च ॥ 5
एभिः प्रधर्षणायां च वारितं वनपालकैः । मामप्यचिन्तयन्देव भक्षयन्ति वनौकसः ॥ 6
शिष्टमत्रापविद्ध्यन्ति भक्षयन्ति तथापरे । निवार्यमाणास्ते सर्वे भ्रुकुटिं दर्शयन्ति हि ॥ 7
इमे हि संरब्धतरास्तदा तैः संप्रधर्षिताः । निवार्यन्ते वनात्तस्मात्क्रुद्धैर्वानरपुङ्गवैः ॥ 8
ततस्तैर्बहुभिर्वीरैर्वानरैर्वानरर्षभाः । संरक्तनयनैः क्रोधाद्धरयः संप्रधर्षिताः ॥ 9
पाणिभिर्निहताः केचित्केचिज्जानुभिराहताः । प्रकृष्टाश्च यथा कामं देवमार्गं च दर्शिताः ॥ 10
एवमेते हताः शूरास्त्वयि तिष्ठति भर्तरि । कृत्स्नं मधुवनं चैव प्रकामं तैश्च भक्ष्यते ॥ 11
एवं विज्ञाप्यमानं तं सुग्रीवं वानरर्षभम् । अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा ॥ 12
किमयं वानरो राजन्वनपः प्रत्युपस्थितः । किं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् ॥ 13
एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना । लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ 14
आर्य लक्ष्मण संप्राह वीरो दधिमुखः कपिः । अङ्गदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः ॥ 15
नैषामकृतकार्याणामीदृशः स्याद्व्यतिक्रमः । वनं यदभिपन्नास्ते साधितं कर्म तद्ध्रुवम् ॥ 16
दृष्टा देवी न संदेहो न चान्येन हनूमता । न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः ॥ 17
कार्यसिद्धिर्हनुमति मतिश्च हरिपुङ्गवे । व्यवसायश्च वीर्यं च श्रुतं चापि प्रतिष्ठितम् ॥ 18
जाम्बवान्यत्र नेता स्यादङ्गदश्च महाबलः । हनूमांश्चाप्यधिष्ठाता न तत्र गतिरन्यथा ॥ 19
अङ्गदप्रमुखैर्वीरैर्हतं मधुवनं किल । विचित्य दक्षिणामाशामागतैर्हरिपुङ्गवैः ॥ 20
आगतैश्च प्रहृष्टं तद्यथा मधुवनं हि तैः । धर्षितं च वनं कृत्स्नमुपयुक्तं तु वानरैः ॥ 21
पातिता वनपालास्ते तदा जानुभिराहताः । एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह ॥ 22
नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः । दृष्टा सीता महाबाहो सौमित्रे पश्य तत्त्वतः ॥ 23
अभिगम्य यथा सर्वे पिबन्ति मधु वानराः । न चाप्यदृष्ट्वा वैदेहीं विश्रुताः पुरुषर्षभ ॥ 24
वनं दत्तवरं दिव्यं धर्षयेयुर्वनौकसः । ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः ॥ 25
श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् । प्राहृष्यत भृशं रामो लक्ष्मणश्च महायशाः ॥ 26

श्रुत्वा दधिमुखस्यैवं सुग्रीवस्तु प्रहृष्य च । वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत ॥ 27
प्रीतोऽस्मि सोऽहं यद्भुक्तं वनं तैः कृतकर्मभिः । धर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् ॥ 28
इच्छामि शीघ्रं हनुमत्प्रधानाञ्शाखामृगांस्तान्मृगराजदर्पान् ।
द्रष्टुं कृतार्थान्सह राघवाभ्यां श्रोतुं च सीताधिगमे प्रयत्नम् ॥ 29
प्रीतिस्फीताक्षौ संप्रहृष्टौ कुमारौ दृष्ट्वा सिद्धार्थौ वानराणां च राजा ।
अङ्गैः संहृष्टैः कार्यसिद्धिं विदित्वा बाह्वोरासन्नांसोऽतिमात्रं ननन्द ॥ 30

इति अष्टपञ्चाशः सर्गः ॥

---

# अथ एकोनषष्टितमः सर्गः ॥ (प्रा. सं. 64)

हनुमन्मुखात् सीताप्रवृत्तिमुपलभ्य रामलक्ष्मणयोर्हर्षः ॥

ஹனுமான் வாயாக ஸீதைவரலாற்றைக்கேட்டு, ராம லக்ஷ்மணர்கள் ஸந்தோஷித்தல்.

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः । राघवं लक्ष्मणं चैव सुग्रीवं चाभ्यवादयत् ॥ 1
स प्रणम्य च सुग्रीवं राघवौ च महाबलौ । वानरैः सहितः शूरैर्दिवमेवोत्पपात ह ॥ 2
स यथैवागतः पूर्वं तथैव त्वरितं गतः । निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ 3
स प्रविष्टो मधुवनं ददर्श हरियूथपान् । विमदानुत्थितान्सर्वान्मेहमानान्मधूदकम् ॥ 4
स तानुपागमद्वीरो बद्धा करपुटाञ्जलिम् । उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदम् ॥ 5
सौम्य रोषो न कर्तव्यो यदेभिः परिवारितः । अज्ञानाद्रक्षिभिः क्रोधाद्भवन्तः प्रतिषेधिताः ॥ 6
श्रान्तो दूरादनुप्राप्तो भक्षयस्व स्वकं मधु । युवराजस्त्वमीशश्च वनस्यास्य महाबल ॥ 7
मौर्ख्यात्पूर्वं कृतो रोषस्तद्भवान्क्षन्तुमर्हति । यथैव हि पिता तेऽभूत्पूर्वं हरिगणेश्वरः ॥ 8
तथा त्वमपि सुग्रीवो नान्यस्तु हरिसत्तम । आख्यातं हि मया गत्वा पितृव्यस्य तवानघ ॥ 9
इहोपयानं सर्वेषामेतेषां वनचारिणाम् । भवदागमनं श्रुत्वा सहैभिर्वनचारिभिः ॥ 10
प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम् । प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः ॥ 11
शीघ्रं प्रेषय सर्वांस्तानिति होवाच पार्थिवः । श्रुत्वा दधिमुखस्यैतद्वचनं श्लक्ष्णमङ्गदः ॥ 12
अब्रवीत्तान्हरिश्रेष्ठो वाक्यं वाक्यविशारदः । शङ्के श्रुतोऽयं वृत्तान्तो रामेण हरियूथपाः ॥ 13
तत्क्षमं नेह नः स्थातुं कृते कार्ये परंतपाः । पीत्वा मधु यथाकामं विक्रान्ता वनचारिणः ॥ 14
किं शेषं गमनं तत्र सुग्रीवो यत्र मे गुरुः । सर्वे यथा मां वक्ष्यन्ति समेत्य हरिपुङ्गवाः ॥ 15
तथास्मि कर्ता कर्तव्ये भवद्भिः परवानहम् । नाज्ञापयितुमीशोऽहं युवराजोऽस्मि यद्यपि ॥ 16
अयुक्तं कृतकर्माणो यूयं धर्षयितुं बलात् । ब्रुवतश्चाङ्गदस्यैवं श्रुत्वा वचनमुत्तमम् ॥ 17

प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः । एवं वक्ष्यति को राजन्प्रभुः सन्वानरर्षभ ॥ 18
ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते । तव चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित् ॥ * 19
सन्नतिर्हि तवाख्याति भविष्यच्छुभयोग्यताम् । सर्वे वयमपि प्राप्तास्तत्र गन्तुं कृतक्षणाः ॥ 20
स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः । त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात्पदम् ॥ 21
कच्चिद्गन्तुं हरिश्रेष्ठ ब्रूमः सत्यमिदं तु ते । एवं तु वदतां तेषामङ्गदः प्रत्यभापत ॥ 22
साधु गच्छाम इत्युक्त्वा उत्पपात महीतलात् । उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः ॥ 23
कृत्वाकाशं निराकाशं यन्त्रोत्क्षिप्ता इवोपलाः । अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ॥ 24
तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवङ्गमाः । विनदन्तो महानादं घनवातेरिता यथा ॥ 25
अङ्गदे समनुप्राप्ते सुग्रीवो वानरेश्वरः । उवाच शोकसंतप्तं रामं कमललोचनम् ॥ 26
समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः । नागन्तुमिह शक्यं तैरतीते समये हि नः ॥ 27
अङ्गदस्य प्रहर्षाच्च जानामि शुभदर्शन । न मत्सकाशमागच्छेत्कृत्ये हि विनिपातिते ॥ 28
युवराजो महाबाहुः प्लवतामङ्गदो वरः । यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः ॥ 29
भवेत्तु दीनवदनो भ्रान्तविप्लुतमानसः । पितृपैतामहं चैतत्पूर्वकैरभिरक्षितम् ॥ 30
न मे मधुवनं हन्याददृष्ट्वा जनकात्मजाम् । कौसल्यासुप्रजा राम समाश्वसिहि सुव्रत ॥ 31
मा भूश्चिन्तासमायुक्तः संप्रत्यमितविक्रम । ततः किलकिलाशब्दं शुश्रावासन्नमम्बरे ॥ 32
हनूमत्कर्मदृप्तानां नदतां काननौकसाम् । किष्किन्धामुपयातानां सिद्धिं कथयतामिव ॥ 33
ततः श्रुत्वा निनादं तं कपीनां कपिसत्तमः । आयताञ्चितलाङ्गूलः सोऽभवद्धृष्टमानसः ॥ 34
आजग्मुस्तेऽपि हरयो रामदर्शनकाङ्क्षिणः । अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ॥ 35
तेऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च मदान्विताः । निपेतुर्हरिराजस्य समीपे राघवस्य च ॥ 36
हनूमांश्च महाबाहुः प्रणम्य शिरसा ततः । नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥ 37
दृष्टा देवीति हनुमद्वदनादमृतोपमम् । आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मणः ॥ 38
निश्चितार्थं ततस्तस्मिन्सुग्रीवं पवनात्मजे । लक्ष्मणः प्रीतिमान्प्रीतो बहुमानादवैक्षत ॥ * 39
प्रीत्या च परयोपेतो राघवः परवीरहा । बहुमानेन महता हनूमन्तमवैक्षत ॥ * 40

इति एकोनषष्टितमः सर्गः ॥

19. செல்வத்தால் செருக்கடைந்தவன், எல்லாம் தானேயென்று நினைப்பான்.

39. நெறியுடன் கற்பைக்காற்று உயிரோடிருக்கும் ஸீதையைக்கண்ட செய்தியைக்கேட்டதும், ராம லக்ஷ்மணர்களின் மனோநிலையை அப்படியே படம் பிடித்தாற்போல் வரைகிறார் கவி ஸார்வபௌமர் :—

ஆஞ்சநேயரிடம் கார்யஸித்தியை நிச்சயித்த ஸுக்ரீவனை பிறருக்கு அன்பையளிக்கும் லக்ஷ்மணனும், தானே மகிழ்ச்சியடைந்து, நன்மதிப்புடன் பார்த்தான். (ஸுக்ரீவன் இத்தகைய புத்திமானென்று இதுவரை லக்ஷ்மணனுக்குத் தோன்றியதில்லை)

40. பகைவீரர்களையடக்கும் ராமனும் எல்லையில்லா மகிழ்ச்சியுற்று, அதிக மதிப்புடன் ஹனுமானை நோக்கினார். (அவர் வீரத்தை வியந்து)

# अथ षष्टितमः सर्गः ॥ (प्रा. सं. 65)

## चूडामणिप्रदानम् ॥

ஹநுமான் ராமனிடம் சூடாமணியைக் கொடுத்தல்.

ततः प्रस्रवणं शैलं ते गत्वा चित्रकाननम् । प्रणम्य शिरसा रामं लक्ष्मणं च महाबलम् ॥ 1
युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च । प्रवृत्तिमथ सीतायाः प्रवक्तुमुपचक्रमुः ॥ 2
रावणान्तःपुरे रोधं राक्षसीभिश्च तर्जनम् । रामे समनुरागं च यथा च नियमः कृतः ॥ 3
एतदाख्यान्ति ते सर्वं हरयो रामसंनिधौ । वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ॥ 4
क्व सीता वर्तते देवी कथं च मयि वर्तते । एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ॥ 5
रामस्य गदितं श्रुत्वा हरयो रामसंनिधौ । चोदयन्ति हनूमन्तं सीतावृत्तान्तकोविदम् ॥ 6
श्रुत्वा तु वचनं तेषां हनूमान्मारुतात्मजः । प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ॥ 7
उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा । तं मणिं काञ्चनं दिव्यं दीप्यमानं स्वतेजसा ॥ 8
दत्वा रामाय हनुमांस्ततः प्राञ्जलिरब्रवीत् । समुद्रं लङ्घयित्वाहं शतयोजनमायतम् ॥ 9
अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया । तत्र लङ्केति नगरी रावणस्य दुरात्मनः ॥ 10
दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे । तत्र सीता मया दृष्टा रावणान्तःपुरे सती ॥ 11
त्वयि संन्यस्य जीवन्ती रामा राम मनोरथम् । दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ 12
राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने । दुःखमापद्यते देवी त्वया वीर सुखोचिता ॥ 13
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता । एकवेणीधरा दीना त्वयि चिन्तापरायणा ॥ 14
अधःशय्या विवर्णाङ्गी पद्मिनीव हिमागमे । रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ 15
देवी कथंचित्काकुत्स्थ त्वन्मना मार्गिता मया । इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयतानघ ॥ 16
सा मया नरशार्दूल शनैर्विश्वासिता तदा । ततः संभाषिता देवी सर्वमर्थं च दर्शिता ॥ 17
रामसुग्रीवसख्यं च श्रुत्वा हर्षमुपागता । नियतः समुदाचारो भक्तिश्चास्याः सदा त्वयि ॥ 18
एवं मया महाभाग दृष्टा जनकनन्दिनी । उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ॥ 19
अभिज्ञानं च मे दत्तं यथावृत्तं तवान्तिके । चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ॥ 20
विज्ञाप्यः पुनरप्येष रामो वायुसुत त्वया । अखिलेन यथा दृष्टमिति मामाह जानकी ॥ 21
अयं चास्मै प्रदातव्यो यत्नात्सुपरिरक्षितः । ब्रुवता वचनान्येव सुग्रीवस्योपशृण्वतः ॥ 22
एष चूडामणिः श्रीमान्मया ते यत्नरक्षितः । मनःशिलायास्तिलकं तत्स्मरस्वेति चाब्रवीत् ॥ 23
एष निर्यातितः श्रीमान्मया ते वारिसंभवः । एनं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ ॥ 24
जीवितं धारयिष्यामि मासं दशरथात्मज । ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ॥ 25
इति मामब्रवीत्सीता कृशाङ्गी धर्मचारिणी । रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना ॥ 26
एतदेव मयाख्यातं सर्वं राघव यद्यथा । सर्वथा सागरजले संतारः प्रविधीयताम् ॥ 27

तौ जाताश्वासौ राजपुत्रौ विदित्वा तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाख्यातं सर्वमेवानुपूर्व्याद्वाचा संपूर्णं वायुपुत्रः शशंस ॥ 28

इति षष्टितमः सर्गः ॥

## अथ एकषष्टितमः सर्गः ॥ (प्रा. सं. 66)

### रामेण विशिष्य सीतावृत्तान्तप्रश्नः ॥

*ராமன் விபரமாய் ஸீதையின் வரலாற்றை வினவுதல்.*

एवमुक्तो हनुमता रामो दशरथात्मजः । तं मणिं हृदये कृत्वा रुरोद सहलक्ष्मणः ॥ 1
तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः । नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ 2
यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला । तथा ममापि हृदयं मणिश्रेष्ठस्य दर्शनात् ॥ 3
मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले यथा बद्धमधिकं मूर्ध्नि शोभते ॥ 4
अयं हि जलसंभूतो मणिः प्रवरपूजितः । यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ॥ 5
इमं दृष्ट्वा मणिश्रेष्ठं यथा तातस्य दर्शनम् । अद्यास्म्यवगतः सौम्य वैदेहस्य तथा विभोः ॥ 6
अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः । अद्यास्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ॥ 7
किमाह सीता वैदेही ब्रूहि सौम्य पुनःपुनः । पिपासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा ॥ 8
इतस्तु किं दुःखतरं यमिमं वारिसंभवम् । मणिं पश्यामि सौमित्रे वैदेहीमागतं विना ॥ 9
चिरं जीवति वैदेही यदि मासं धरिष्यति । क्षणं वीर न जीवेयं विना तामसितेक्षणाम् ॥ 10
नय मामपि तं देशं यत्र दृष्टा मम प्रिया । न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ॥ 11
कथं सा मम सुश्रोणी भीरुभीरुः सती तदा । भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ॥ 12
शारदस्तिमिरोन्मुक्तो नूनं चन्द्र इवाम्बुदैः । आवृतं वदनं तस्या न विराजति राक्षसैः ॥ 13
किमाह सीता हनुमंस्तत्त्वतः कथयस्व मे । एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥ 14
मधुरा मधुरालापा किमाह मम भामिनी । मद्विहीना वरारोहा हनुमन्कथयस्व मे ॥ 15

इति एकषष्टितमः सर्गः ॥

## अथ द्विषष्टितमः सर्गः ॥ (प्रा. सं. 67)

### सीताभाषितानुवचनम् ॥

*ஸீதையின் செய்திகளைக் கூறல்.*

एवमुक्तस्तु हनुमान्राघवेण महात्मना । सीताया भाषितं सर्वं न्यवेदयत राघवे ॥ 1
इदमुक्तवती देवी जानकी पुरुषर्षभ । पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम् ॥ 2

सुखसुप्ता त्वया सार्धं जानकी पूर्वमुत्थिता । वायसः सहसोत्पत्य विददार स्तनान्तरम् ॥ 3
पर्यायेण च सुप्तस्त्वं देव्यङ्के भरताग्रज । पुनश्च किल पक्षी स देव्या जनयति व्यथाम् ॥ 4
पुनः पुनरुपागम्य विददार भृशं किल । ततस्त्वं बोधितस्तस्याः शोणितेन समुक्षितः ॥ 5
वायसेन च तेनैवं सततं बाध्यमानया । बोधितः किल देव्या त्वं सुखसुप्तः परंतप ॥ 6
तां च दृष्ट्वा महाबाहो दारितां च स्तनान्तरे । आशीविष इव क्रुद्धस्ततो वाक्यं त्वमूचिवान् ॥ 7
नखाग्रैः केन ते भीरु दारितं वै स्तनान्तरम् । कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ 8
निरीक्षमाणः सहसा वायसं समुदैक्षथाः । नखैः सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितम् ॥ 9
सुतः किल स शक्रस्य वायसः पततां वरः । धरान्तरगतः शीघ्रं पवनस्य गतौ समः ॥ 10
ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः । वायसे त्वं व्यधाः क्रूरां मतिं मतिमतां वर ॥ 11
स दर्भं संस्तराद्गृह्य ब्रह्मास्त्रेण न्ययोजयः । स दीप्त इव कालाग्निर्जज्वालाभिमुखः खगम् ॥ 12
स त्वं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति । ततस्तु वायसं दीप्तः स दर्भोऽनुजगाम ह ॥ 13
भीतैश्च संपरित्यक्तः सुरैः सर्वैश्च वायसः । त्रींल्लोकान्संपरिक्रम्य त्रातारं नाधिगच्छति ॥ 14
पुनरप्यागतस्तत्र त्वत्सकाशमरिंदम । त्वं तं निपतितं भूमौ धरण्यां शरणागतम् ॥ 15
वधार्हमपि काकुत्स्थ कृपया पर्यपालयः । मोघमस्त्रं न शक्यं तु कर्तुमित्येव राघव ॥ 16
भवांस्तस्याक्षि काकस्य हिनस्ति स स दक्षिणम् । वायसस्त्वां नमस्कृत्य राज्ञो दशरथस्य च ॥ 17
विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम् । एवमस्त्रविदां श्रेष्ठः सत्त्ववाञ्छीलवानपि ॥ 18
किमर्थमस्त्रं रक्षःसु न योजयसि राघव । न दानवा न गन्धर्वा नासुरा न मरुद्गणाः ॥ 19
तव राम रणे शक्तास्तथा प्रतिसमासितुम् । तव वीर्यवतः कच्चिन्मयि यद्यस्ति संभ्रमः ॥ 20
क्षिप्रं सुनिशितैर्बाणैर्हन्यतां युधि रावणः । भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परंतपः ॥ 21
स किमर्थं नरवरो न मां रक्षति राघवः । शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ॥ 22
सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः । ममैव दुष्कृतं किंचिन्महदस्ति न संशयः ॥ 23
समर्थौ सहितौ यन्मां न रक्षेते परंतपौ । वैदेह्या वचनं श्रुत्वा करुणं साधुभाषितम् ॥ 24
पुनरप्यहमार्यां तामिदं वचनमब्रुवम् । त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ॥ 25
रामे दुःखाभिभूते च लक्ष्मणः परितप्यते । कथंचिद्भवती दृष्टा न कालः परिशोचितुम् ॥ 26
इदं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि । तावुभौ नरशार्दूलौ राजपुत्रौ परंतपौ ॥ 27
त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः । हत्वा च समरे रौद्रं रावणं सहबान्धवम् ॥ 28
राघवस्त्वां वरारोहे स्वपुरीं नयिता ध्रुवम् । यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ॥ 29
प्रीतिसंजननं तस्य प्रदातुं तत्त्वमर्हसि । साभिवीक्ष्य दिशः सर्वा वेण्युद्ग्रथनमुत्तमम् ॥ 30
मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल । प्रतिगृह्य मणिं दिव्यं तव हेतो रघूद्वह ॥ 31
शिरसा संप्रणम्यैनामहमागमने त्वरे । गमने च कृतोत्साहमवेक्ष्य वरवर्णिनी ॥ 32
विवर्धमानं च हि मामुवाच जनकात्मजा । अश्रुपूर्णमुखी दीना बाष्पगद्गदभाषिणी ॥ 33

ममोत्पतनसंभ्रान्ता शोकवेगसमाहता। मामुवाच ततः सीता सभाग्योऽसि महाकपे ॥ 34
यद्द्रक्ष्यसि महाबाहुं रामं कमललोचनम्। लक्ष्मणं च महाबाहुं देवरं मे यशस्विनम् ॥ 35
सीतयाप्येवमुक्तोऽहमब्रुवं मैथिलीं तथा। पृष्ठमारोह मे देवि क्षिप्रं जनकनन्दिनि ॥ 36
यावत्ते दर्शयाम्यद्य ससुग्रीवं सलक्ष्मणम्। राघवं च महाभागे भर्तारमसितेक्षणे ॥ 37
साब्रवीन्मां ततो देवी नैष धर्मो महाकपे। यत्ते पृष्ठं सिषेवेऽहं स्ववशा हरिपुङ्गव ॥ 38
पुरा च यदहं वीर स्पृष्टा गात्रेषु रक्षसा। तत्राहं किं करिष्यामि कालेनोपनिपीडिता ॥ 39
गच्छ त्वं कपिशार्दूल यत्र तौ नृपतेः सुतौ। इत्येवं सा समाभाष्य भूयः संदेष्टुमास्थिता ॥ 40
हनूमन्सिंहसंकाशौ तावुभौ रामलक्ष्मणौ। सुग्रीवं च सहामात्यं सर्वान्ब्रूया अनामयम् ॥ 41
यथा च स महाबाहुर्मां तारयति राघवः। अस्माद्दुःखाम्बुसंरोधात्त्वमाख्यातुमर्हसि ॥ 42
इदं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च।
ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ 43
एतत्तवार्या नृप संयता सा सीता वचः प्राह विषादपूर्वम्।
एतच्च बुद्ध्वा गदितो यथा त्वं श्रद्धत्स्व सीतां कुशलां समग्राम् ॥ 44

इति द्विषष्टितमः सर्गः ॥

---

## अथ त्रिषष्टितमः सर्गः ॥ (प्रा. सं. 68)

हनुमत्समाश्वासनवचनानुवादः ॥

ஹனுமான், தான் ஆறுதல் கூறியதைக் கூறல்.

अथाहमुत्तरं देव्या पुनरुक्तः ससंभ्रमः। तव स्नेहान्नरव्याघ्र सौहार्दादनुमान्य च ॥ 1
एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया। यथा मां प्राप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥ 2
यदि वा मन्यसे वीर वसैकाहमरिंदम। कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ 3
मम चाप्यल्पभाग्यायाः सांनिध्यात्तव वानर। अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ॥ 4
गते हि त्वयि विक्रान्त पुनरागमनाय वै। प्राणानामपि संदेहो मम स्यान्नात्र संशयः ॥ 5
तवादर्शनजः शोको भूयो मां परितापयेत्। दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥ 6
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः। सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ 7
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम्। तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ 8
त्रयाणामेव भूतानां सागरस्येह लङ्घने। शक्तिः स्याद्वैनतेयस्य वायोर्वा तव वानघ ॥ 9
तदस्मिन्कार्यनिर्योगे वीरैवं दुरतिक्रमे। किं पश्यसि समाधानं त्वं हि कार्यविदां वरः ॥ 10
काममस्य त्वमेवैकः कार्यस्य परिसाधने। पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ 11
बलैः समग्रैर्यदि मां हत्वा रावणमाहवे। विजयी स्वपुरीं रामो नयेत्तत्स्याद्यशस्करम् ॥ 12

यथाहं तस्य वीरस्य वनादुपधिना हृता। रक्षसा तद्भयादेव तथा नार्हति राघवः॥ 13
बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः। मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत्॥ 14
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः। भवत्याहवशूरस्य तथा त्वमुपपादय॥ 15
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम्। निशम्याहं ततः शेषं वाक्यमुत्तरमब्रुवम्॥ 16
देवी हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः। सुग्रीवः सत्त्वसंपन्नस्त्वदर्थे कृतनिश्चयः॥ 17
तस्य विक्रमसंपन्नाः सत्त्ववन्तो महाबलाः। मनःसंकल्पसंपाताः निदेशे हरयः स्थिताः॥ 18
येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः। न च कर्मसु सीदन्ति महत्स्वमिततेजसः॥ 19
असकृत्तैर्महाभागैर्वानरैर्बलसंयुतैः। प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः॥ 20
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः। मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ॥ 21
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः। नहि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः॥ 22
तदलं परितापेन देवि मन्युरपैतु ते। एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः॥ 23
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ। त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः॥ 24
अरिघ्नं सिंहसंकाशं क्षिप्रं द्रक्ष्यसि राघवम्। लक्ष्मणं च धनुष्मन्तं लङ्काद्वारमुपागतम्॥ 25
नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान्। वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान्॥ 26
शैलाम्बुदनिकाशानां लङ्कामलयसानुषु। नर्दतां कपिमुख्यानां न चिराच्छ्रोष्यसे स्वनम्॥ 27
निवृत्तवनवासं च त्वया सार्धमरिंदमम्। अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम्॥ 28

ततो मया वाग्भिरदीनभाषिणा शिवाभिरिष्टाभिरभिप्रसादिता।
उवाह शान्तिं मम मैथिलात्मजा तवातिशोकेन तथातिपीडिता॥ 29

इति त्रिषष्टितमः सर्गः॥

---

इति श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
श्रीमत्सुन्दरकाण्डः समाप्तः॥

---

श्रीरामचन्द्रः श्रितपारिजातः समस्तकल्याणगुणाभिरामः।
सीतामुखाम्भोरुहचञ्चरीकः निरन्तरं मङ्गलमातनोतु॥



Vaidika Vardhini Press, 45, Karikkara Street, Kumbakonam.

# ॥ अथ युद्धकाण्डे आदित्यहृदयस्तोत्रम् ॥

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् । रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ ॥१॥
दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् । उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥ ॥२॥
राम राम महाबाहो शृणु गुह्यं सनातनम् । येन सर्वानरीन्वत्स समरे विजयिष्यसि ॥ ॥३॥
आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् । जयावहं जपं नित्यमक्षयं परमं शिवम् ॥ ॥४॥
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् । चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ॥५॥
रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् । पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ॥६॥
सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः । एष देवासुरगणान् लोकान्पाति गभस्तिभिः ॥ ॥७॥
एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः । महेन्द्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥ ॥८॥
पितरो वसवस्साद्ध्या ह्यश्विनौ मरुतो मनुः । वायुर्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ॥ ॥९॥
आदित्यस्सविता सूर्यः खगः पूषा गभस्तिमान् । सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ॥ ॥१०॥
हरिदश्वस्सहस्रार्चिः सप्तसप्तिर्मरीचिमान् । तिमिरोन्मथनश्शम्भुस्त्वष्टा मार्ताण्डकोंऽशुमान् ॥ ॥११॥
हिरण्यगर्भः शिशिरस्तपनोऽहस्करो रविः । अग्निगर्भोऽदितेः पुत्रश्शङ्खः शिशिरनाशनः ॥ ॥१२॥
व्योमनाथस्तमोभेदी ऋग्यजुस्सामपारगः । घनवृष्टिरपांमित्रो विन्ध्यवीथी प्लवङ्गमः ॥ ॥१३॥
आतपी मण्डली मृत्युः पिङ्गलस्सर्वतापनः । कविर्विश्वो महातेजा रक्तस्सर्वभवोद्भवः ॥ ॥१४॥
नक्षत्रग्रहताराणामधिपो विश्वभावनः । तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ ॥१५॥
नमः पूर्वाय गिरये पश्चिमायाद्रये नमः । ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ ॥१६॥
जयाय जयभद्राय हर्यश्वाय नमो नमः । नमो नमस्सहस्रांशो आदित्याय नमो नमः ॥ ॥१७॥
नम उग्राय वीराय सारङ्गाय नमो नमः । नमः पद्मप्रबोधाय प्रचण्डाय नमो नमः ॥ ॥१८॥
ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ ॥१९॥
तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने । कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ ॥२०॥
तप्तचामीकराभाय हरये विश्वकर्मणे । नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥ ॥२१॥
नाशयत्येष वै भूतं तमेव सृजति प्रभुः । पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ ॥२२॥
एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः । एष एवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥ ॥२३॥
वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च । यानि कृत्यानि लोकेषु सर्वेषु परम प्रभुः ॥ ॥२४॥
एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च । कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ॥ ॥२५॥
पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् । एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ ॥२६॥
अस्मिन्क्षणे महाबाहो रावणं त्वं वधिष्यसि । एवमुक्त्वा तदाऽगस्त्यो जगाम च यथागतम् ॥ ॥२७॥
एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा । धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ ॥२८॥
आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् । त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ ॥२९॥
रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत् । सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥ ॥३०॥

अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः । [127]
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥ ॥३१॥

---

## ॥ रावणवधः ॥

अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः । वेदप्रोक्तेन विधिना संदधे कार्मुके बली ॥
तस्मिन्संधीयमाने तु राघवेण शरोत्तमे । सर्वभूतानि वित्रेसुश्चचाल च वसुंधरा ॥
स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् । चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् ॥
स वज्र इव दुर्धर्षो वज्रिबाहुविसर्जितः । कृतान्त इव चावार्यो न्यपतद्रावणोरसि ॥
स विसृष्टो महावेगः शरीरान्तकरः शरः । बिभेद हृदयं तस्य रावणस्य दुरात्मनः ॥
रुधिराक्तः स वेगेन जीवितान्तकरः शरः । रावणस्य हरन्प्राणान्विवेश धरणीतलम् ॥
गतासुर्भीमवेगस्तु नैर्ऋतेन्द्रो महाद्युतिः । पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥
आविवेश महान्हर्षो देवानां चारणैः सह । रावणे निहते रौद्रे सर्वलोकभयंकरे ॥

---

## ॥ श्रीरामपट्टाभिषेकः ॥

ततस्सप्रयतो वृद्धो वसिष्ठो ब्राह्मणैस्सह । रामं रत्नमये पीठे सहसीतं न्यवेशयत् ॥
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः । कात्यायनस्सुयज्ञश्चगौतमो विजयस्तथा ॥
अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना । सलिलेन सहस्राक्षं वसवो वासवं यथा ॥

---

## ॥ पारायणसमापनसमयानुसन्धेयक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकास्समस्तास्सुखिनो भवन्तु ॥
काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥
रामाय रामभद्राय रामचन्द्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥
मङ्गळं कोसलेन्द्राय महनीयगुणात्मने । चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥
कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वा प्रकृतेस्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

---

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदिपरपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥

---

# ERRATA.

## शुद्धाशुद्धम् ॥

| पृष्ठं | श्लोकः | पादः | अशुद्धं | शुद्धं |
|---|---|---|---|---|
| 3 | 54 | 3 | ताराभिरिव | ताराभिरभि |
| 5 | 123 | 3 | मम मान्यस्य | बहु मन्यस्व |
| 6 | 151 | 1 | प्रिविश्य | प्रविश्य |
| 8 | 8 | 3 | स नगाग्रे | नगाग्रे च |
| 11 | 22 | 1 | तस्यवीरस्य | तस्य वीरस्य |
| 18 | 9 | 1 | महीकृता | मही कृता |
| 19 | 14 | 3 | कृतासुहस्ता | कृता सुहस्ता |
| 20 | 7 | 2 | तिमिंगिल | तिमिङ्गिल |
| 21 | 29 | 3 | श्वतु | स्तु |
| 24 | 14 | 3 | संविष्टं | संविष्टे |
| 25 | 36 | 1 | स्ततैवा | स्तथैवा |
| | 38 | 2 | मङ्कुकेन | मडुकेन |
| | 43 | 1 | न्तरस्तेन | न्तरस्थेन |
| 26 | 4 | 3 | पानभूमौहरि | पानभूमौ हरि |
| 33 | 29 | 1 | जलेन पतिताग्रैश्च | जले निपतिताग्रैश्च |
| 43 | 11 | 3 | ष्ट्राणि | राष्ट्राणि |
| 47 | 5 | 4 | विक्लवन्त | विक्लवं त्व |
| 48 | 30 | 4 | पारमान्यै | पारमन्यै |
| | 35 | 2 | दुःख | सुख |
| 51 | Heading | | स्वापोद्दष्टा | स्वापोद्बुद्धा |
| 58 | 30 | 3 | नाशं | नान्यै |
| 62 | 26 | 3 | हिनाया | हीनाया |
| | 28 | 3 | पुरा दृष्टं | पुराऽदृष्टं |
| 64 | 11 | 3 | मर्यादाना | मर्यादानां |

| पृष्ठं | श्लोकः | पादः | अशुद्धं | शुद्धं |
|---|---|---|---|---|
| 68 | 25 | 1 | वानराधिपतेः | वानराधिपतिः |
| 74 | 60 | 3 | राजपुत्रप्रियश्रेष्ठः | राजपुत्रः प्रियज्येष्ठः |
| | 62 | 2 | मनुसरत् | मनुसरेत् |
| 75 | 27 | 3 | पश्यसे | पश्यसि |
| 76 | 45 | 1 | शैलाभ्बुद | शैलाम्बुद |
| | Heading | | प्रयाणोत्साटः | प्रयाणोत्साहः |
| 78 | 8 | 4 | स मानये | समानये |
| 79 | 10 | 2 | को ह्यहम् | को ह्ययम् |
| 80 | 40 | 3 | सपन्नग | स पन्नग |
| 81 | 15 | 1 | स | Omit |
| 85 | 7 | 3 | सहतोरण | सह तोरण |
| 88 | 10 | 1 | बलावभर्द | बलावमर्द |
| | 16 | 3 | युद्धोद्धतकृतो | युद्धोद्धतः कृतो |
| 90 | 44 | 2 | गुणदर्शनम् | गुणदर्शनः |
| 101 | Tamil foot Note | | 4–6<br>நீராவியால | 3–6<br>நீரால |
| 105 | 12 | 4 | लाङ्गूल | लाङ्गूलं |
| 107 | 17 | 1 | धर्मभूतां | धर्मभृतां |
| 108 | 46 | 1 | दक्षिणां | दक्षिणं |
| 109 | 85 | 1 | समुत्थाप्य | समुत्थाय |
| 112 | Sanskrit note 13th line. | | पौनरुक्ता | पुनरुक्ता |
| 114 | 29 | 3 | सर्वापध्यत्वं | सर्वावध्यत्वं |
| 115 | 14 | 4 | प्लुपन्ति | प्लुवन्ति |
| 120 | 25 | 4 | घनवाते | घना वाते |